मन्त्रालङ्कृतदेहभृन्निशि दिवा सन्ध्यासु सन्तोषयन्
अर्चाहोमसमाधिभिश्शिवमसौ संयाति शैवं पदम् ॥ ८ ॥

आयामैरिति। श्वसनस्य प्राणवायोः। आयामैः रेचकपूरककुम्भकाख्यैः। कामिके—मात्राद्वादशभिर्हीनं द्विगुणैर्मध्यमो मतः। त्रिगुणैरुत्तमः कालः प्रत्येकं रेचकादिषु। रेचयेद्देहगं वायुं अशुद्धं व्योमसंस्थितम्। शुद्धं वायुं पूरकेण समाहृत्य शनैश्शनैः। सम्पूर्णकुम्भवत्तिष्ठेद्रेचयेत्तदनन्तरम्। इति। भौतिकमलं देहं मातापित्रोर्भौतिकशरीरस्थशोणितशुक्लाख्यमलपरिणतिरूपम्। तथा शिवतन्त्ररहस्यसारे—"देहस्थानि तु भूतानि शोध्यानि स्युर्दिने दिने। निश्शेषदग्धपापस्य भुक्तभोगस्य चात्मनः। निर्दग्धसञ्चितागाम्यकर्मणो निर्मलात्मनः। मातापितृसमुद्भूते देहे स्थातुं न युज्यते। तस्मान्मन्त्रमयः कायः क्रियते प्रतिवासरम्।" इति। देहं इन्द्रियाधारम्। तदुक्तम्—"शरीरमिन्द्रियाधारं तात्त्विकं चित्प्रकाशकम्" इति। कलाभिः निवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीताभिः। सुधीः पाशज्ञानरहितशिवशक्त्या दर्शितसर्वार्थः। मुखदर्पणयोराभिमुख्ये सत्यपि सूर्यतेजसा विना स्वमुखदर्शनं न विद्यते। तथा स्वात्मबुद्धीन्द्रियार्थानां सत्यपि सन्निकर्षे शिवशक्त्या विना सर्वार्थदर्शनमात्मनो न घटते। तस्मात्पूजाहोमसमाध्यादिसर्वकर्मकलापं शिवशक्त्याऽहङ्करोमीति यो भावयति स सुधीः। पञ्चाध्वविसर्पिणीभिः। तत्वभुवनवर्णपदमन्त्रव्याप्तिभिः। तदुक्तं प्रयोगस्मरणे त्रिलोचनशिवेन—

शतान्यष्ट पुरः क्षोणी तदर्धार्धपदान्यणू[1]।
सद्यो हृच्च गुणाः पञ्च निवृत्तिर्ब्रह्मकारणा ॥

वारितत्वानि गारार्णं तमः पुरयुतं शिरः।
वामः करपदानि स्युः प्रतिष्ठा च गुणा हरिः ॥

---

१. 'शतनाथाः पुरः क्षोभूरक्ताद्धरपदान्यसू' इति मातृकापाठः।

सप्ततत्वान्यपि स्वरा पुरो विंशत्पदान्यणू ।
शिखाघोरौ च सप्तार्णा विद्या रुद्रस्त्रयो गुणाः ॥

तत्ववर्णास्त्रयो वर्म वक्त्रौ नागेन्दवः पुरः ।
पदान्येकादशगुणौ शान्तिश्चेश्वरकारणा ॥

तत्वद्वयं तिथिपुरो गुणश्चैकं पदं स्वराः ।
अस्त्रेशानशिवा मन्त्राश्शान्त्यतीता सदेशगा ॥ इति ।

तच्छम्बरैः तन्मन्त्रैः। तदुक्तं सार्धत्रिशत्याम् —"हृद्बीजं पार्थिवे युक्त्या पृथिवीं धारयेत्क्रमात् । शिरोऽप्सु तेजसि शिखां कवचं वायुना सह। अस्त्रं च शिवसंयुक्तमाकाशं धारयेत्क्रमात्"। अस्यार्थः—हृद्बीजं हृदयबीजम्। हृदाद्यङ्गोद्धारो द्विशत्यां —'यवर्गादष्टमं बीजं मात्राद्वादशके स्थितम् । अक्षरान्तरितं कृत्वा सषडङ्गश्शिवो भवेत्। प्रथमं हृदयं विद्यात् द्वितीयं तु शिरो भवेत्। तृतीयं तु शिखां देवि चतुर्थं कवचं भवेत्। पञ्चमं तु शिवं विद्यात् षष्ठमस्त्रं विसर्गजम्' इति। अत्रोक्तद्वितीयतृतीय-चतुर्थ[1]षण्णवदशस्वराढ्यप्रासादस्य च हृच्छिरश्शिखाकवचमूलाख्यस्योपरि बिन्दुर्योज्यः तत्रैव—'ह्रस्वो दहति पापानि दीर्घो मोक्षप्रदो भवेत्। आप्यायने प्लुतश्चेति मूर्ध्नि बिन्दु विभूषितम्। ब्रह्माणि ह्रस्वाः प्रोक्तानि दीर्घाण्यङ्गानि षण्मुख' इति श्रुत्या साऽङ्गज एव। तदुक्तं पौष्करे—'मोक्ष-शिवाङ्गजः प्रोक्तः[3]' इति। किंच द्विशत्याम्—बिन्दुजः पुरुषो ज्ञेय ईशा-नस्तु शिवात्मजः। इति। तस्मात् नादस्तु[4] वियोज्यः। ह्रस्वं बिन्दुगतं प्रोक्तं ब्रह्मरन्ध्रगतं प्लुतं इति वचनात्। किञ्च मूलमन्त्रस्य षष्ठो वियोज्यः। तद्द्विशत्याम् —त्रिमात्रश्च द्विमात्रश्च एकमात्रस्तथैव च। अर्धमात्रः पर-स्सूक्ष्मस्तस्याप्यूर्ध्वं परात्परम्। अत्र द्विमात्र ऊकारः। कण्ठेऽष्टाङ्गुल-केऽर्धांशो द्विमात्रोऽर्कशशिद्युतिः इति वचनात्। किञ्च। ब्रह्मा विष्णुश्च रुद्रश्च

१. मरौ इति सुवचम्। २. चतुर्थपञ्चम इत्यधिकतया कश्चन पाठः। ३. पात इति पाठभेदः। ४. नादान्तश्च इति पाठभेदः।

ईश्वरश्च शिवस्तथा । पञ्चधा पञ्चदैवत्यः सकळः परिपठ्यते। इति द्विशत्यां ज्ञानसद्भावपटले प्रोक्तत्वात् मन्त्रोद्धारपटलोक्तमूलोऽपि सकळ एव । प्रासादनिर्णयपटले प्राधान्यस्य द्विशत्यामुक्तत्वात् । 'प्रासादं यो न जानाति पञ्चमन्त्रमहातनुम् । अष्टत्रिंशत्कलायुक्तं न स आचार्य उच्यते' इति । तर्हि 'सद्यं चाष्टकलायुक्तमकाराक्षरजं विदुः । विद्यादुकारजं वाममघोरं तु मकारजम्' इति द्विशत्यामुक्तत्वान्मेधार्धीशकलयोरत्र नावकाशः। तत्सत्यं; सम्प्रदायिनामेव नावकाशः। आपरमेश्वरादविच्छिन्नसम्प्रदायिभिरामर्दमठस्थाचार्यैस्सहैवं वक्तुं शक्यम् । अकारश्च हकारश्च द्वावेतावेकसंस्थितौ । विभक्तिर्नैव विद्येत मारुताम्बरयोरिव । इति अकारयुक्तहकारस्योपरि प्रणवसंयोगान्मेधा सम्भवति । तथा सदाशिवपद्धत्याम्—"ओं[1]कारं तु द्विधा कृत्वा हकारेणैव योजनम् । अन्यदीकारसम्बन्धादेकारत्वं प्रपद्यते । एकारऊकारयोगादयादेशविलोपतः। प्रकृतिभावे प्राप्ते चान्त्याशिवसंहिता पुनः । [2]अकारऊकारयोगादोकारस्सम्प्रपद्यते । अकारेण हयुक्तेन स ओकारः प्रयुज्यते। हौं[3]कार एव भवति बिन्द्वाद्यं प्राग्वदिष्यते" इति । अत्र मेधा त्रिमात्रेतिश्रुत्या प्लुत एव । त्रिमात्रस्तु प्लुतो ज्ञेय इति वैयाकरणाः । तस्य तादृग्विधोच्चारात् पञ्चमस्वरस्य षष्ठत्वं भवति। एवमेवास्मत्पितामहपितामहेन सिद्धान्तसारावलीकृता त्रिलोचनशिवेन द्विशतीमन्त्रोद्धारेण सोऽर्थो निरूपितः । तद्यथा—

श्रीमद्द्विशतिकायां यन्मन्त्रोद्धाराय सूचितम् ।
यवर्गादष्टमं बीजमित्यस्यार्थो निरूप्यते ॥

य एव वर्गो यवर्गस्तस्मादष्टममक्षरम् ।
सान्ताख्यं तच्च बीजं स्यात्सर्वशक्त्युद्भवत्वतः ॥

---

१. अकारं इति पाठभेदः। २. आकार इति पाठभेदः । ३. औंकार इति पाठभेदः । ४. तस्य इति पाठभेदः । ५. सद्य इति पाठभेदः ।

मात्रैरित्यस्य लिङ्गस्य व्यत्ययश्छान्दसो मतः ।
स्वरषोडशमध्ये तु षण्डाक्षरविवर्जिते ॥

मात्राद्वादशकैर्युक्तो ह्रस्वदीर्घविभागतः ।
देहावयवभूतानां सद्यादिब्रह्मणां विभोः ॥

अङ्गिनश्च हृदादीनामङ्गानां वाचकं भवेत् ।
संक्षेपरुचयो वर्णास्सद्यादिब्रह्मवाचकाः ॥

हृदादिवाचिवर्णानामन्तः क्षिप्ता इहोदिताः ।
यथा हृदादित्रितये सद्याद्यन्तर्गतं त्रिकम् ॥

ह्रस्वद्वितयजन्यत्वाद्दीर्घाणां कवचे तथा ।
वक्त्रमन्तर्गतं ज्ञेयं तद्वक्त्रं नरजं यतः ॥

शिवेऽन्तर्गत ईशानो मेधा ह्यर्घीशसम्भवा ।
दृगप्यन्तर्गता तस्मिन्ननुस्वारात्मिका हि सा ॥

अनुस्वारो भवेन्नेत्रं सर्वेषां चोपरि स्थितम् ।
इति तन्त्रैस्समानेषु कालज्ञानेन सर्वतः ॥

प्रासादे तु भवेद्बिन्दुर्विशेषावयवत्वतः ।
बिन्दुजः पुरुषो ज्ञेय इति चात्रैव दर्शनात् ॥

दृशश्चितत्वरूपत्वात्तस्याः प्रासादसम्भवात् ।
अन्तर्भावो भवेत्तस्य तस्मिन्नान्यत्र कुत्र चित् ॥

त्रिमात्रादिश्रुतिबलात्पञ्चमस्तु प्लुतो भवेत् ।
तस्य तादृग्विधोच्चारात् षष्ठे यद्गम्यते स्वरे ॥

तस्मान्मेधागृहादेव षष्ठोऽप्यत्रैव सूचितः ।
अन्यथा शिववर्णादिवक्ष्यमाणकलादयः ॥

---

१. मन्त्रैरिति तन्त्रे इति च पाठभेदो विद्यते । २. स्वरः इत्यपि पाठः ।

प्रासादस्य न युज्येत सूचनीयस्ततोऽपि सः ।
वक्ष्यन्ते सकळाद्या ये कण्ठोष्ठान्ताश्शिवाणवः ॥

सिद्धीनां साधकत्वेन साधनायैव चोदिताः ।
सदाशिवस्य ते तस्मात्परिवारतया स्थिताः ॥

सदाशिवे पवित्राङ्गसकळादिपरिच्छदः ।
देवस्सदाशिव इति श्रीमृगेन्द्रादिषु श्रुतेः ॥

परमस्य शिवस्यातो नैषामेकोऽपि वाचकः ।
अतस्तेन द्वितीयोसावित्युक्तिर्नैव युज्यते ॥

प्रासादस्य तु साकल्यं पञ्चब्रह्मकलान्वयात् ।
नैष्कळ्यं तद्वियोगेन तस्मादेष तु निष्कळः ॥

इति वक्तुं न घटते वक्ष्यमाणविरोधतः ।
तथाहि श्रूयते चात्र प्रासादाकारनिर्णये ॥

सद्यश्चाष्टकलायुक्तमकाराक्षरसम्भवम् ।
विद्यादुकारजं वाममघोरं तु मकारजम् ॥

बिन्दुजः पुरुषो ज्ञेयः ईशानस्तु शिवात्मजः ।
प्रासादं यो न जानाति पञ्चमन्त्रमहातनुम् ॥

अष्टत्रिंशत्कलोपेतं न स आचार्य उच्यते ।
एतच्छ्रुतिविरोधेन पौर्वापर्यमजानताम् ॥

व्याख्यानकौशलं तद्धि नाद्रियेरन् मनीषिणः ।
एवं सर्वज्ञतामुख्यपदषट्काङ्गयोगिनः ॥

शिवस्य वाचकत्वेन मन्त्रसङ्घोऽप्यभीरितः ।
तद्विधावयवं तस्माच्चिच्छेदेति निगद्यते ॥

---

१. कण्ठोष्ठ्यान्ता इत्यपि पाठः । २. बीजं इति पाठभेदः । ३. षड्विधा-वयवम् इति पाठभेदः ।

तदुक्तं पञ्चिकाकारैरधिष्ठेयत्वहेतुकम् ।
अशिवत्वमजादीनामङ्गानामपि तत्समम् ॥

तान्यप्यधिष्ठितान्येव धर्मत्वाच्छम्भुना यतः ।
किन्तु तत्र विशेषोऽयं ब्रह्मणां देहरूपिता[1] ॥

तत्पालकत्वमङ्गानामेतावन्मात्रहेतुतः ।
अन्तर्भावो मतोऽङ्गेषु ब्रह्मणां न तु हेयतः ॥

तद्वर्जितत्वमन्त्रेष्टं[2] पृथगुच्चारणं[3] बुधैः ।
अन्तर्भावस्य संसिद्धेर्विरोधोऽत्र न कश्चन ॥

इत्थं द्वादशमात्रासु षट्कस्यैव परिग्रहात् ।
शेषाक्षराणां तेष्वेवमन्तरायः प्रदर्शितः ॥

वस्तुसामर्थ्यसंसिद्धसंहितान्तरचोदितः ।
सूच्यतेऽत्र तुशब्देन नतिप्रणवसङ्गमः ॥

तथा समानतन्त्रोक्तबिन्दुयोगात् द्वितीयतः ।
विनाऽस्त्रेण हृदादीनामङ्गानामङ्गिनस्तथा ॥

तृतीयेनार्धचन्द्रादिकलायोगाश्शिवस्य तु ।
प्रासादनिर्णयेप्येतत्सूत्रकारोपदेक्ष्यति ॥

पद्धत्यामपि दीक्षायां विस्तृतं ब्रह्मशम्भुना ।
शिवेनैतन्मन्त्रजातं षड्विधं परिकीर्तितम् ॥

नत्वनन्तादिनैतैस्य[4] परं प्रामाण्यमीरितम् ।
अन्तर्भावफलं चैतद्धृदयाद्यर्चनादिभिः ॥

---

१. रूपतः इति पाठभेदः । २. मन्त्रेषु इत्यपि पाठः । ३. गुच्चारणे इत्यपि पाठः । ४. नेत्रस्य इत्यपि पाठः ।

अर्चनायमजातादिब्रह्मणामपि सेत्स्यति ।
न्यासस्तु ब्रह्मणां मूर्तौ विद्यादेहे न भाव्यते ॥
आसनस्य मनूद्धारः पूजायामिह वक्ष्यते ।
अव्यक्तमूर्तेरुद्धारो द्विरभ्यासपदेरितः ॥
विद्यादेहमनूद्धारसूचनं स्फुटमेव हि ।
प्रासादं यो न जानाति पञ्चमन्त्रमहातनुम् ।
अष्टत्रिंशत्कलोपेतमित्यत्र श्रुतितो भवेत् ।
इति द्विशतिसूत्रोक्तमन्त्रोद्धारो विवेचितः ॥
श्रीमदामर्दकस्थानगुरुवंशप्ररोहिणा ।
गुरुणा हकुच्छिवाख्येन कार्तिकेयप्रसादतः ॥
इति तस्मात् द्विशत्यां स ब्रह्माङ्गो मूलमन्त्रतः ।

इति मूलाङ्गनिरूपणम् । हृद्बीजं हृदयबीजं सबिन्दुकम् । पार्थिवे पृथिवीबीजे लकारे । तदुक्तं कारणे—'पृथिव्यादीनि बीजानि लवरयहकारका' इत्युक्तत्वात् संयोज्य पृथिवीं निवृत्तिकलां ध्यायेत् । तदुक्तं तत्र दीक्षापटले—"निवृत्तिः पृथिवी ज्ञेया प्रतिष्ठाद्याप उच्यते । विद्यां तेजो विजानीयाद्वायुश्शान्तिः प्रकीर्तिता ॥ शान्त्यतीता भवेद्व्योम' इति ॥ तदुक्तम्—शिरोबीजमप्लुतवकारे[1] । शिखाबीजं तेजसि रेफे । सबिन्दुः कवचो वायुना यकारेण । हृद्बीजमित्युक्तत्वाच्छिरः प्रभृतीनां बीजमेव । आकाशं शान्त्यतीतकलां शिवसंयुक्तमस्त्रमूलमन्त्रं[2] धारयेत् । तत्राऽऽकाशबीजात्मको हकार एक एव । मूलास्त्रोक्तहकारयोरभावः । तयोर्हकारश्चाप्रकृतित्वात् । अप्रकृतिश्च[3] ब्रह्माङ्गमूलवाचकानां विषण्डद्वादशस्वराणां हकारसाधारणत्वात् । तस्मान्मेधार्धांशबिन्दूनामेव मूलत्वम् । तथा शिवतन्त्ररहस्यसारे "आकाशस्य समाख्याता शुद्धिर्वै निष्कळेन तु । निष्कळस्तु शिवे ज्ञेयः

---

१. प्लुतवकारे इत्यपि पाठः । २. शिवसंयुक्तमूलमन्त्रामित्यपि पाठः. ३. अत्र प्रकृतिश्च इत्यपि पाठः ।

तत्राप्यूकारसयुतः" इति । तदुपर्यस्त्रबीजं विसर्जनीयमात्रमेव । तथा शिवतन्त्ररहस्यसारे—"हौंकारमस्त्रसंयुक्तं मण्डलेषु प्रयोजयेत्" । इति । तथा शुद्धाख्ये—"तत्वान्तं तत्वसंयुक्तं कलान्तेन समन्वितम् । कार्यकारणसंयुक्तं पञ्चमं बीजमुच्यते ॥" तत्र तत्वान्तं सान्तम् । क्ष्मादिपञ्चतत्वानाम् अन्तत्वात् । तत्वं तत्वप्रासादम् । तदुक्तं तत्र—"षष्ठं चैवादिबीजं च तत्वान्ते विनियोजयेत् । कार्यकारणसंयुक्तं सर्वतत्वात्मकं विदुः" । अत्र आदिबीजं औकारः । षष्ठमूकारः । कलान्तो विसर्जनीयः । कार्यं बिन्दुः कारणं नादः । तस्माच्छुद्धा सबिन्दुका सविसर्जनीया बिन्दूपरिविसर्गाढ्या इति चतुर्विधा मातृका शिवागमेष्विति मन्तव्या । एवं प्रमाणमेधार्घांशबिन्दुविसर्जनीयैः शान्त्यतीतकलामन्त्र उद्धृतः । शुद्धाख्यपक्षनिष्ठानां बिन्दुविसर्गबिन्दुनादाः प्राणमेधार्घांशोपरि ज्ञातव्याः । एवं त्रिभिर्निवृत्यादिकलामन्त्रैरानिशं संशोध्य । शोधनप्रकारश्च सिद्धान्तसारावल्याम्—

कुम्भापूरकरेचकार्धयुगळैर्ह्लामादिमन्त्रान् पठन्
पृथ्व्यादिस्थगुणस्थितिक्रमयुतं पत्राद्ययोगान्वितम् ।
शोषाद्दाहनतश्च भस्मविगमाच्छुद्धाभ्रसम्भावना-
च्छक्त्या प्लावितमन्त्रविग्रहयुतः पूजां विदध्याद्धृदि ॥ इति ।

**मन्त्रालंकृतदेहभृत्** मन्त्रैः मूलब्रह्माङ्गैरलङ्कृतो यथास्थिति न्यस्तो देहः तं बिभ्रत् । अत्र मन्त्रास्त्रिविधाः । मालाबीजपदभेदेन । तदुक्तं "ताश्च त्रिरूपा विज्ञेया" इति । तेषु मालामन्त्राः "ईशानस्सर्वविद्यानां, तत्पुरुषायविद्महे, अघोरेभ्यः, वामदेवाय नमः, सद्योजातं प्रपद्यामि, ओं नमः परमात्मने सुशिव शिवस्य आयाहि पिङ्गळः । ओं जुंसः । ओं प्रस्फुर प्रस्फुर" इत्यादि ब्रह्माङ्गानि । व्योमव्यापिपदान्येकाशीतिरपि मूलं बीजाङ्गमन्त्रं पूर्वमुद्धृतम् । ब्रह्माणि ब्रह्मपञ्चकम् । बिन्दुराकाशम् । पूर्वमेवाङ्गमूलान्युद्धृतानि । पदमन्त्राः—ओं व्योमव्यापिने व्योमरूपाय सर्व-

---

१. मन्त्र इत्यपि पाठः ।

व्यापिने। शिवायेति मूलम्। स्वायम्भुवे–'ओङ्कारादि शिवायान्तं विद्यात्पञ्चात्मकं शिवम्'। इति। ईशानमूर्धाय। तत्पुरुषवक्त्राय। अघोरहृदयाय। वामदेवगुह्याय। सद्योजातमूर्तये। इति पदब्रह्माणि। तथा स्वायम्भुवे–"पदब्रह्माण्यतः पञ्च तत्रेशानं षडक्षरम्। पुरुषादीनि चत्वारि सप्तसप्ताक्षराणि तु"। इति। अङ्गानि हृदयादीनि। प्रणवादिशिवाय तन्मूलपदं[1]पञ्चकमेव। तथास्वायम्भुवे––"सर्वात्मानं विजानीयादोमित्येकाक्षरं पदम्। पञ्चाक्षरं चतुर्थ्यन्तं[2] द्वितीयं सुशिरो[3] विदुः। तृतीयं तु शिखां विद्यात्सप्तवर्णपदं तथा। पञ्चाक्षरं च कवचं चतुर्थं पूर्ववत्स्मृतम्। पञ्चमं त्र्यक्षरं ज्ञेयं शिवास्त्रं तदिहोच्यते" इति।

न्यासो द्विधा। सामान्यो विशेषश्चेति। तत्र सामान्यस्त्रिविधः सृष्टिस्थितिसंहारभेदेन। सृष्टिरीशानाद्यस्त्रादिन्यासः। संहारस्सद्यादिहृदयादिन्यासः। ब्रह्मणां सृष्टिक्रमेण हृदयादीनां संहारक्रमेण यो न्यासस्स स्थितिः। तथा विशेषश्च सोऽष्टत्रिंशत्कलान्यासरूपः। सोऽपि त्रिविधः। सशक्तिकः, विशक्तिकः, केवलशक्तिकश्चेति। सशक्तिकः ईशानस्सर्वविद्यानां शशिन्यै नमः इत्यादि। केवलशक्तिभिः कृतः क्रियाक्रमद्योतिकायां—"शशिनी चोर्ध्वमूर्धा स्यात्पूर्वमूर्धाऽङ्गदा भवेत्"। इत्यादि। विशक्तिकस्सिद्धान्तसारावळ्यां—

ईशे नां नाश्च ह्यास्तु वोंहे हि द्रयान्नरेभ्य भ्यरभ्यर्वभ्यद्र-
भ्यो घोरे वेदमालो मल मल च ममा वामदेवे मनो मः।
मिर्भोवे त्रीणि मां वोद्भव य च हि नमस्सद्यमन्त्रे कलास्स्युः
पञ्चाठ्घिश्चाष्टाविंश्वेप्यहिरिति च यथासङ्ख्यमष्टाधि त्रिंशत्॥ इति।

अत्र साधकनैष्ठिकब्रह्मचारिणां बुभुक्षुगृहिणस्सपत्नीकवानप्रस्थस्य लोकधर्मिणीदीक्षितस्य गृहस्थस्य लोकधर्मिणीभौतिकब्रह्मचारिणः। सृष्टि-

१. पदेत्येतत्पदं कासुचिन्मातृकासु न लभ्यते। २. चतुर्थं तत् इति पाठभेदः। ३. सुशिवं इति पाठभेदः।

न्यासः। अपत्नीकवनस्थस्य सन्यासनैष्ठिकमुमुक्षुनैष्ठिकब्रह्मचारिणश्च संहारन्यासो नित्यः। देहान्तमुमुक्षोर्गृहस्थस्य तथाविधभौतिकस्य तथाविधब्रह्मचारिणः तथाविधसपत्नीकवनस्थस्यापि स्थितिन्यासो नित्यः। भौतिकनैष्ठिकगृहस्थाचार्ययोः स्थितिन्यासो नित्यः। नैष्ठिकेनापि साधकदीक्षाकर्तव्यत्वात् आचार्यस्यान्त्येष्ट्यां संहारन्यासः। दीक्षायां शिष्यार्हन्यासः। एषु न्यासेषु अनेन विवक्षितः कराङ्गयोस्संहारषडङ्गन्यासः सामान्यः। विशेषसकळीकरणे सृष्ट्या मालाब्रह्मणां शक्तिरहितानां न्यास एव। वक्ष्यति चात्र 'ईशानं सर्वासा'मित्यादि। तस्मादेवं सकळीकरणमुक्त्वाऽन्तर्यजनमभिदधाति—निशि दिवा सन्ध्यासु सन्तोषयन्नर्चाहोमसमाधिभिश्शिवं इति निशि वामनासापुटप्रवाहरूपेडानाड्यां चन्द्रसंज्ञायाम्। तथा तेन–"इडायां तु हृदि स्थानम्" इति। "रात्रौ सम्पूजयेद्देवम्" इति। हृदयेऽर्चाविधानमिति। अस्यां नाड्यां प्रवहति मरुति तस्य प्राणापानवृत्त्योर्विनाशाख्यकुम्भक एव पूजा। तथा तेन—"न दिने पूजयेद्देवं रात्रौ नैव च नैव च। सन्ततं पूजयेद्देवं दिवारात्रौ च[1] वर्जयेत्।" कामिकेऽपि—"चन्द्रार्कनाशने पूजा साधयेदीप्सितं फलम्। सुषुम्नामध्यगे प्राणे पूजयेत्सर्वदेवताः" इति। दिवा दक्षनासापुटप्रवाहरूपार्कसंज्ञपिङ्गळानाड्याम्। तथा तेन—पिङ्गळानाभिपद्मे तु इति। नाभौ होमं प्रकल्पयेदिति। दिवा होमं प्रकल्पयेत् इति। सौरः खलु वह्निसन्धान इति। अस्यां नाड्यां सुषुम्नास्थेन प्राणेनार्कसंज्ञेन[2] वह्निसंस्कारः। तदुक्तं तेन—"हृत्पुण्डरीकमध्यात्तु सौषुम्नेन पथाऽनलम्। द्वादशान्तपदे योज्य[3] तत्तेजः पुञ्जपिञ्जरम्। तेन विन्यासमात्रेण सर्वकर्मार्हको भवेत्" इति। अत्र प्रातस्सन्ध्या हृदि दिवास्थानत्वात्। नाभौ सायं सन्ध्या तु निशास्थान-

---

१. न पूजयेत् इत्यपि पाठः। २. प्रवाहेण इत्यपि पाठः। ३. योज्यं इत्यपि पाठः।

स्वात् । मूलाधारेऽर्धरात्रम् । बुभुक्षुमुमुक्ष्वोर्मध्याह्नं भ्रूमध्ये । अर्चाहोमसमाधिभिश्शिवं सन्तोषयन् असौ शैवं पदं शैवं तु लक्ष्मेति सर्वज्ञतादिगुणं संयातीत्यर्थः । अत्र केचित् । सर्वज्ञतादिगुणषट्कं देहान्तमुक्तिभाजामेव जीवन्मुक्तानामिति केचिद्वदन्ति । तदयुक्तम् । अत्र यत्दृक्स्वरूपमसौ सत्यं नित्यमुक्तशुद्धव्याप्ताविकारं चित्स्वरूपं दर्शयति । तत्स्वरूपमेव देहान्तमुक्तावपि दर्शयति । विकृतौ-व्यक्तिरूपाणि शक्तिरूपाणि संहृताविति सत्कार्यवादपक्षे श्रीमन्मृगेन्द्रादिषूक्तत्वात् आत्मनाश्शिवाख्यविकृतिर्मुक्तौ तत्र स्वकीयदृक्क्रियाशक्त्योर्व्यक्तिस्सर्वदेशाण्डविषयसर्वज्ञत्वसर्वकर्तृत्वरूपा । संहृतदृक्क्रियाशक्तित्वमेवाऽऽत्मतत्वम् । अत्र जीवन्मुक्तौ स्वदृक्क्रियाशक्त्योरेकदेशाण्डविषयसर्वज्ञत्वसर्वकर्तृत्वमनुभवसिद्धमेव । किंच कर्मयोगसमाधिनिष्ठानां योगाधिष्ठिततत्वाधस्तनेषु सर्वज्ञताद्या विद्यन्ते । सर्वज्ञता तृप्तिरनादिबोधश्च ज्ञानशक्तिभेदाः । स्वतन्त्रता लुप्तानन्तशक्तयः क्रियाशक्तिभेदाः । तदुक्तमस्माभिः प्रमेयसङ्ग्रहे--

बोधाख्या शक्तिरेका स्वपरविषयसंवेदने दृक्क्रियेच्छा
सर्वज्ञानादिबुद्धा दृगपि भवति तृप्ता क्रिया च स्वतन्त्राः ।
सा लुप्तानन्तशक्तिस्सहजमललयात्ते हृदाद्या गुणास्स्युः
सा शम्भोर्ब्रह्मरूपा भवति विविधविश्व[२]ज्ञता पञ्चकृत्ये ॥
सर्वज्ञश्शिव आवृतिप्रळयतश्चावेद्यवस्तुक्षया-
त्तृप्तोऽनादिसुबुद्ध आदिकरणाभावात्स्वभोगस्य च ।
स्वाधीनः परतन्त्रभोगलयतश्चाव्यापकैर्नश्वरैः
कर्माक्षैर्विरहादलुप्तनियता(मो)होमतः पूरके ॥

तथा शिवतन्त्ररहस्यसारे—"पूरकाकृष्टपीयूषहविषाऽथशिवाणुभिः । नाभिकुण्डे स्वतस्सिद्धे तर्पयेत्तु शिवानलम्"। इति । तथा सिद्धान्त-

१. शार्थविषय इति पाठभेदः । २. विषय इति पाठभेदः ।

सारावळ्यामपि—'वह्नावेवमपि प्रपूज्य जुहुयात्पूर्वोक्तयोगेन तत्स्थानस्था-मिडया स्रुवेण च सुधामन्ते सुषुम्नास्रुचा' इति। सन्ध्यासु अत्र बहुवच नात् पिङ्गळेडासुषुम्नानाडीस्थप्राणादित्योदयान्तरूपद्वादशान्ते प्रातर्मध्य-सायार्धरात्रभेदेन मुमुक्षुभिस्सत्तामात्रसंविद्रूपशिवो ध्येयः। तथा तेन-सन्ध्यासु च समाधिस्स्यादिति। ध्यानाद्यो विषुव इति। शिवतन्त्ररहस्य-सारे—सन्ध्यासु विषुवं प्रोक्तमिति च। "समीभूते यदा वायुश्चरते सम्पु-टद्वये। विषुवं तं विजानीयात्पुण्यमात्रोभयात्मकम्" इति च। "अहर्निशे परित्यज्य मध्यदेशे यदा स्थितिः। विषुवं तं विजानीयात्तं ज्ञात्वा मोक्षदो भवेत्"। इति च। "इन्द्रियार्थान् परित्यज्य परे व्योम्नि च संस्थितः। निश्चलस्स्थिरभूतस्तु विषुवं तं विनिर्दिशेत्" इति कालोत्तरे। "सूर्यस्य ग्रहणे वत्स प्रत्यक्षयजनं स्मृतम्" इति च। आधारनाभिहृत्कण्ठललाट-ब्रह्मरन्ध्रशक्तिव्यापिनीदेवीसमनोन्मनास्वेकत्र ध्यानं समाधिः बुभुक्षोरेव। तदुक्तं कामिके—"हृत्कण्ठतालुभ्रूमध्यरोधिन्यो ब्रह्मरन्ध्रकम्। कुटिला-व्यापिनी देवी समना चोन्मना तथा। तासामुपरि या शक्तिस्तस्यां वा योज-येन्नरम्।" कालोत्तरे—"देहस्थस्सकळो ज्ञेयो निष्कळो देहवर्जितः" इति। 'ललाटेवेश्वरं ध्याये'दिति सर्वज्ञानोत्तरे। मूर्ध्नि ते शिवरत्नबाणरस-भेदेनोत्तरो विशिष्टद्रव्यभेदेन सप्तधा। तदवान्तरभेदान्यनेकानि। एषु बाणलिङ्गमेवानेनाङ्गीकृतम्। तथा कामिके—'कोटिकोटिगुणं बाणं महा-कोटिगुणं रसम्' इति ॥ ८ ॥

य एष देवो महतो महीया-
नणोरणीयान् भवभीरुभिस्सः।
ज्ञेयश्शिवस्सर्वगतश्शरीरे
ध्येयस्स पूज्यश्शिवलिङ्गमध्ये ॥ ९ ॥

---

१. सर्वेष्वप्यादर्शेष्वेवमेव विद्यते ॥

एवं लिङ्गं निश्चित्यान्तर्यजनहवनध्यानलक्षणं विस्तरतो वदति —

हृत्पद्माख्यशिवालये मनसिजे तत्कर्णिकाख्ये क्रिया
पीठे ज्ञानमयं विशुद्धमनसा संस्थाप्य नादात्मना ।
लिङ्गं तच्च सुधामयेन पयसा संस्नाप्य सम्यक् पुनः
वैराग्येण च चन्दनेन वसुभिः पुष्पैरहिंसादिभिः ॥ १० ॥

हृत्पद्मेति । **मनसिजे** मनसा विभाविते **हृत्पद्माख्ये । शिवालये** शिवधाम्नि । तथा सिद्धान्तसारावळ्यां—'हृत्पद्मे मनसा विभावितमहामायोपरिष्ठासने' इति । **तत्कर्णिकाख्ये क्रियापीठे** तत् हृत्पद्मम् । तस्य कर्णिकानामधेये क्रियाशक्तिस्वरूपेऽभिव्यक्तहेतुबिन्द्वाख्यपीठे । सार्धत्रिशत्यां—'चन्द्राग्निरविसंयुक्ता ह्याद्या कुण्डलिनी तु या । हृत्प्रदेशे तु सा ज्ञेया ह्यङ्कुराकारवत्स्थिता' इति । शुद्धाख्ये—'नादं लिङ्गमिति ज्ञेयं बिन्दुः पीठमुदाहृतम्' इति । वरुणपद्धत्यां—'ज्ञानशक्त्यात्मके लिङ्गे क्रियाशक्तेस्समर्पणम् । पीठस्य विधिना योगः प्रतिष्ठा सा च पञ्चधा ।' इति । **ज्ञानमयं विशुद्धमनसा संस्थाप्य नादात्मना** नादो हंसः । मकुटे—'प्राणिनां देहमध्ये तु स्थितो हंसस्सदाशिवः' । इति । निश्वासे—"नादो बिन्दुसमायुक्तस्सकळस्सतु निष्कळः । स नित्यः परमात्मा च स शिवस्सच निष्कळः । बिन्दुनादः परो जीवो बिन्दुनादः परो जपः ।" इति । सोऽपि दीपाकारः । तथा निश्वासे—"श्रवणाङ्गुष्ठसंयोगाद्यश्शब्दस्सम्प्रवर्तते । दीप्तवह्निशिखातुल्यो घोष इत्यभिधीयते ॥ अस्य संश्रवणादेव नादस्याऽऽयतलोचने । परमेष्यति निर्वाणं किन्तु पाशनिबन्धनम् । ममात्मीयमिदं सूक्ष्मशरीरं [1]नादसंस्थितम् । पशोः पाशापनोदाय प्रकाशीकृतमद्भुतम्" ॥ इति ॥ 'भित्वा हृत्पद्मग्रन्थिं तु ततश्शब्दः प्रजायते । हृदाकाशसमायोगाद्घोषशब्द[2]समो भवेत्' ॥ इति स्वच्छन्दे दक्षिण-

---

१. तावदास्थितं इति पाठभेदः । २. स्समो इति पाठभेदः ।

स्रोतसि च। **नादात्मना** नादस्वरूपेण परिणतं ज्ञानमयम् । ज्ञानशक्तेर्व्यक्तिस्थलस्वरूपम् । तत्र त्रिविधम् । पीठे लिङ्गमाधिभौतिकमाध्यात्मिकम् आधिदैविकं चेति । आद्यं वृत्ताकारं बिन्दुपीठम् । दण्डाकारनादो लिङ्गम् । द्वितीयं हंसपीठे लिङ्गम् । तृतीयं क्रियाशक्तिपीठम् । प्रकाशरूपिणीस्वप्रकाशरूपिणीज्ञानशक्तिलिङ्गम् । एवंभूतलिङ्गं क्रियाशक्तिस्वरूपपीठे विशुद्धमनसा संस्थाप्य । शुद्धदेहत्वान्मनश्चास्य शुद्धम् । तदुक्तं मृगेन्द्रे—"नादस्सूक्ष्मः कलाकालरागयुग्मे सपूरुषे। स्थूलः पञ्चकलो नादः पञ्चतत्वाश्रयो मुने । प्रधानादिचतुर्ग्रन्थिनिधिर्बिन्दुश्चतुष्कलः । गर्वे मनोमुखा देवा बुद्धौ भावादयस्स्थिताः । पञ्चमन्त्रतनुर्देवस्स्थितस्तन्मात्रपञ्चके । सूक्ष्मभूतेषु मन्त्रेशा मन्त्रास्स्थूलेषु संस्थिताः" ॥ इति । अत्र वक्ष्यमाणया शक्त्या आदिशिवासनं पीठे विन्यस्य लिङ्गे मूर्तिं तस्यां विद्यादेहं तस्मिन् परमशिवं बिन्द्वन्तं नादान्तं लयान्तं मूलमन्त्रेण संस्थाप्य । आवाह्येत्यर्थः। तच्च। लिङ्गं सुधामयेन क्षुब्धशक्तिपरिस्रुतबहुळामृतस्वरूपेण। **पयसा संस्नाप्य** जलेनाभिषिच्य । **वैराग्येण चन्दनेन**। वैराग्यो बुद्धिधर्मः। मृगेन्द्रे—'भावा बुद्धिगुणा धर्मज्ञानवैराग्यभूतयः' इति । सांसिद्धिकवैराग्यस्वभावो भोगेष्वसक्तिरूपः । मृगेन्द्रे—'वश्याक्रान्तिस्तत्परिज्ञानयोगो भोगानिच्छा विघ्नसङ्घव्यपायः' इति। तथा तेन—भोगेष्वनभिलाषो वैराग्यादिति । तेन भुवनभोगशरीरहेतुकर्ममलक्षयः । तन्नाशेन मायेयतनुकरणयोः क्षयः। तेन मायाकर्मणोः क्षयहेतुश्चन्दनमित्यर्थः । **वसुभिः** अष्टभिः पुष्पैः । अहिंसादिभिः तथा तेन—'अहिंसा प्रथमं पुष्पं इन्द्रियाणां तु निग्रहः । क्षान्तिपुष्पं दयापुष्पं ज्ञानपुष्पमतः परम् । तपः पुष्पं सत्यपुष्पं भावपुष्पं तथाऽष्टमम् ' इति । एतान्यष्टपुष्पाणि बुद्धिजधर्मरूपाणि। तदुक्तं शैवार्थसङ्ग्रहे–'धर्मश्च द्विविधो ज्ञेयो यमश्च नियमस्त्विति। अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्कता' इति यमः । 'अक्रोधो गुरुशुश्रूषा शौचं सन्तोषमार्जवम्' इति नियमः । 'परेषु दुःखानुत्पादोऽहिंसा सापेक्षतां विना । मिथ्याभूतहितं सत्यं नोतथ्यं सत्यमुच्यते' ॥ भावपुष्पं

5

अस्तेयं परद्रव्यानुपादानम् । अस्तेयं न्यायं विनेतिभावो मनस्सङ्कल्पः। शुद्धमनसामेवास्तेयत्वमित्यर्थः । इन्द्रियनिग्रहो ब्रह्मचर्यम् । 'मातृवन्मन्यते यस्तु प्रार्थयन्तीमपि स्त्रियम् । ब्रह्मचर्यं तदुद्दिष्टं विना दारैर्गृहाश्रमैः'। क्षान्तिरक्रोधः । 'अक्रोधो निर्विकारत्वमाक्रोशो ताडनेऽपि वा' । इति । दयापुष्पं सन्तोषः । 'सन्तोषमुदितस्तन्त्रे लाभालाभे समा मतिः' । निर्वाणानां [1]लाभालाभा समं घटन्ते । तस्मात्तपःपुष्पम् । गुरुशुश्रूषा । पित्रादौ पूज्ये चाऽऽज्ञानुपालनमिति । ज्ञानपुष्पं भावशुद्धिरूपम् । शौचम् । 'बाह्याचाभ्यन्तरा शुद्धिः शौचं भावाज्जलादिभिः' इति शिवधर्मोत्तरे। 'गङ्गातोयेन सर्वेण मृद्भारैश्च नगोपमैः । आमृत्योराचरन् शौचं भावदुष्टो न शुद्ध्यति' ॥ १० ॥

**प्राणायामभवेन धूपविधिना चिद्दीपदानेन यः**
**प्रत्याहारमयेन सोमहविषा सौषुम्नजापेन च ।**
**तच्चित्ते बहुधारणाभिरमलध्यानोद्भवैर्भूषणै-**
**स्तत्साम्याणुनिवेदनेन यजते धन्यस्स एवामलः ॥११॥**

**प्राणायामेति** प्राणः प्राणवायुः तस्य आयामो गमागमः तद्भवेन **धूपविधिना** तदुक्तं मोहसूरोत्तरे—'अग्निः प्राणं मनः पात्रं गर्वधूपशिखाकुला' इति । **चिद्दीपदानेन यः** चित् बुद्धिः । 'प्रेक्षोपलब्धिश्चित्संवित्' इत्यमरः । बुद्धेस्सर्वार्थप्रकाशकत्वाद्दीपवत् इति दीपः । **प्रत्याहारमयेन** इन्द्रियद्वारेण गन्धाद्यर्थेषु गतं मन इन्द्रियार्थेभ्यस्समाहृत्य मुहुर्हृदि यन्मनस्स्थैर्यं क्रियते स प्रत्याहारः । तथा किरणे—'अक्षेशमानयेत्पूर्वम् इन्द्रियार्थगतं शनैः । तदाहृत्य हृदि स्थाप्यं पुनर्यान्तं समाहरेत् ॥ तावद्यावत्स्थिरं जातं प्रत्याहारस्स उच्यते'। इति । **सोमहविषा** सोमो मनः । 'मनश्चक्षुर्द्वयोर्वृत्तिः प्रोक्ता हि शशिभास्करौ' इति । [2]प्रत्योहारितमनसा या

---

१. लाभालाभसमत्वं न घटते इत्यपि पाठः । २. प्रत्याहृत इति पाठभेदः।

सुखदुःखस्पर्शरहिता आन्तरतृप्तिर्जायते सा हविस्त्वेनेह निरूपिता इत्यर्थः। **सौषुम्नजापेन च** सुषुम्नामार्गस्थप्राणगमागमरूपजपेन। तथा तेन— 'दिवा रात्रौ जपस्स्मृतः' इति। **बहुधारणाभिः** चेतस्स्थैर्यं धारणादिभिरेव जायते। स्थिरीभूते चित्ते ध्यानावकाशो भवति। तदन्तरभूतैः **अमल-ध्यानोद्भवैर्भूषणैः** निर्मलसदाशिवाद्याकारजातभूषणैः। निष्कळस्य शिवस्य बिन्दुभोगाधिकारप्रवर्तकनिजशक्तिविलासेनोपरितनसकळाकळत्वसाकल्ययोर्व्यक्तिस्थलस्वरूपाणुसदाशिवाणुरुद्रयोः पञ्चवक्त्रदशभुजाद्याकारो निष्कलशिवस्याऽऽकृतिः। यथा देहदेहिभावभिन्नदेवदत्तस्य देह एव देवदत्तकः। देहदर्शनाद्देवदत्तानुसरणस्य विद्यमानतया। तथा सदाशिवाद्या एव शिव इति ध्यानम्। तद्भूषणमिव भूषणं आकारशोभोद्दीपनत्वादिति भावः। मिश्रसकळयोर्लक्षणनिर्णयश्शिवस्य पौष्करे—'लयभोगाधिकाराणां न भेदा वास्तवाश्शिवे। किंतु बिन्दोरणूनां च वास्तवा एव ते मताः'। अन्यत्र 'अधिकारी स भोगी च लयी स्यादुपचारतः। शक्तोद्युक्तः प्रवृत्तश्च कर्ता त्रिविध इष्यते। शक्तेः प्रवृत्तिभेदेन भेदस्तस्योपचारत'। इति। **तत्साम्याणुनिवेदनेन** तत्साम्यं शिवसमत्वम्। तदेवाऽऽत्मनिवेदनम्। स्वस्य शिवभावेनाऽऽत्मभावविनाशात्। एवं यमनियमप्राणायामप्रत्याहारधारणाध्यानजपसमाधिरूपाष्टाङ्गयोगजातपुष्पाद्यात्मनिवेदनान्तैः कर्मभिः हृदि यो यजते **स एव अमलः मुक्तः। धन्यः** इहलोकसुखश्च। सिद्धिमुक्त्योर्भाजनमित्यर्थः॥ ११॥

**चन्द्रस्राविसुधामयेन हविषा नाभिस्थकुण्डेऽनलं**
**सन्तर्प्येशमयं शिवास्पदगतव्योम्नि स्थिते सर्वगे।**
**कन्दोद्भूतशिवाणुनादशिखया वृत्त्याऽऽत्मसंवेदनं**
**शैवे ज्योतिषि यः करोति पुरुषो मुक्तस्स एवाक्षयः॥१२॥**

---

१. स्पर्शान्तररहिता इति पाठभेदः। २. धारणाभिरेव इत्यपि पाठः॥

चन्द्रेति ॥ ईशमयं ईश्वरस्वरूपम्। अनलं अग्निम्। सच ध्यानरत्नावळ्यां—'स च रक्ततनुस्त्र्यक्षश्शिवायुधभुजान्वितः' । इति। चन्द्रस्राविसुधामयेन हविषा क्षुब्धशक्तिपरिसृतबहुळामृतधाराघृतेन नाभिस्थकुण्डे सन्तर्प्य इत्यन्तर्हवनम्। अथ समाधिः—कन्दोद्भूतशिवाणुनादशिखया वृत्त्या नाभ्यधस्तनकन्दकमलोद्गतः कन्दोद्भूतश्शिवः शिवमन्त्रं हृदयान्तर्व्याप्तम्। स च प्रासादः नादस्वरूपपर्यायः। 'अर्थात्प्रकरणाल्लिङ्गादौचित्यादर्थनिर्णयः' इति वचनात् प्रकरणप्रतिपाद्यस्वरः प्रणवः। शिखया प्रणवस्थनादस्वरूपेण वृत्त्या व्यापारेण। व्यापारोऽत्र मात्रारूपः। वक्ष्यति चात्र चन्द्रयुग्मेत्यादिमात्राश्च। सर्वगे सर्वव्याप्ते कारणशून्यत्वात् परमोपादानत्वात्। शिवास्पदगतव्योम्नि शिवास्पदं च ब्रह्मबिलद्वादशाङ्गुलोर्ध्वं तद्गतव्योम्नि परनादे। स्थिते व्यक्तीभूते। शैवे निष्कळसम्बन्धिनि ज्योतिषि स्वपरप्रकाशरूपे। आत्मसंवेदनं स्वपरप्रकाशदृक्क्रियाशक्त्योस्सर्वज्ञतादिगुणानुभवम्। यः कः पुरुषः करोति। स एव मुक्तः सकलपाशजालशक्तिभिर्विरहितः। अक्षयः स्वस्वरूपादच्युतः। वेदान्तवादिषु मुक्तस्ववरपुनरावृत्तिर्नेत्यर्थः। तदुक्तं मृगेन्द्रे—

यत्कैवल्यं पुंप्रकृत्योर्विवेका-
द्योवा सर्वं ब्रह्म मत्वा विरामः।
या वा काश्चिन्मुक्तयः पाशजन्या-
स्तास्तास्सर्वा भेदमायान्ति सृष्टौ ॥

शैवे सिद्धो भाति मूर्ध्नीतरेषां
मुक्तस्सृष्टौ पुंवरोऽभ्येति नाधः।
विश्वानर्थान् स्वेन विष्टभ्य धाम्ना
सर्वेशानानीरितस्सर्वदाऽऽस्ते ॥ इति ॥ १२ ॥

---

१. प्रणवात्मेति पाठभेदः।

अथ पञ्चशुद्धीरुद्दिशति—

यथावदात्माश्रयवस्तुमन्त्र-
स्वायत्तलिङ्गादिषु शोधितेषु ।
सिद्धान्तमार्गस्थितसाधकानां
त्वत्पूजनं नात्र विलोमतोऽस्तु ॥ १२ ॥

यथावदिति ॥ यथावत् शास्त्रोक्तप्रकारेण । आश्रयं स्थानम् । वस्तु । पूजाङ्गद्रव्यम् । मन्त्रः प्रासादः । स्वायत्तलिङ्गं स्वेष्टलिङ्गम् । आदि शब्देन स्वस्वसमये नैवेद्यतर्पणादिशुद्धिं व्यनक्ति । भूतशुद्ध्यन्तर्यजनहवनध्यान-समाधिभिः आत्मशुद्धिः । हृदि ऊर्ध्वमुखौ करौ कृत्वाऽस्त्रेण ताळत्रयं छोटि-कया दशदिक्षु अस्त्रप्राकारं कवचेन परिखां वौषडन्तशक्त्या धेनुमुद्रां च कृत्वा स्थानशुद्धिर्भवति । मूलनिरीक्षणेन अस्त्रजलपताकाप्रोक्षणेन नारा-चमुद्रास्त्रताडनेन वौषडन्तकवचेनाधोमुखपताकया जलाभ्युक्षणेन चतुस्सं-स्कारः । तत्संस्कृतद्रव्याणि विशेषार्घ्यजलेनाभ्युक्ष्य हृदाभिमन्त्र्य द्रव्य-शुद्धिः । प्रासादस्य ह्रस्वदीर्घप्लुतोच्चारेण मन्त्रशुद्धिः । तदुक्तं—"ह्रस्वं बिन्दुगतं दीर्घं ब्रह्मरन्ध्रगतं प्लुतम् । द्वादशान्तपदे योज्यं[1] प्रासादं मन्त्र-शुद्धये ॥" मन्त्रशुद्धेः पूर्वमात्मनो बाह्यपूजाऽपि कार्या । भूतशुद्धिः आत्मलिङ्गशुद्धिः । आत्मनः आवाहनाद्याः आत्मान्तर्यजनम् । शिवान्तर्यज-नहवनध्यानानन्तरं स्थानद्रव्यशुद्धिरात्मबाह्यपूजा मन्त्रशुद्धिः शिवलिङ्ग-शुद्धिरिति क्रमः । आत्माश्रयवस्तुमन्त्रलिङ्गादिषु शोधितेषु सत्सु सिद्धा-न्तमार्गस्थितसाधकानां कामिकादिशिवागमोक्ताचारस्थितपूजकानाम् । अत्र अस्मिन् शास्त्रे त्वत्पूजनं विलोमतः व्युत्क्रमतः । नास्तु लुप्ताचार-पराणां पिशाचपदप्राप्तित्वात् । तदुक्तं—'समयाचारलोपेन यान्ति शैवाः पिशाचताम्' इति ॥ १२ ॥

धारिकाभिधशक्तिबीजमनन्तपङ्कजकुड्मळं
पुण्यबोधविरागभूतिपदं विलोमचतुष्टयम् ।

---

१. योज्य इति पाठभेदः ।

गात्रकं छदनद्वयं कमलं सकेसरकर्णिकं
शक्तिमण्डलसङ्घयुक्तमहं नमामि शिवासनम् ॥ १४ ॥

धारिकेति । धारिकाभिधशक्तिबीजम् आधारशक्त्याख्यबीजं पद्मकन्दम् । अनन्तपङ्कजकुड्मलम् अनन्तरूपपङ्कजकुड्मलम् । तथा तेन— 'तदुद्भूतसितोद्दण्डसरोजमुकुलाङ्कुरम् ।' 'शुद्धविद्यान्तव्यापकमनन्तं यजेत्' इति । पुण्यबोधविरागभूतिपदं पुण्यो धर्मः । बोधो ज्ञानम् । विरागो वैराग्यम् । भूतिरैश्वर्यमिति एतैर्विरचितपदम् । विलोमचतुष्टयं गात्रकं तानि अधर्माज्ञानावैराग्यानैश्वर्याणि । छदनद्वयम् अधश्छदनमूर्ध्वच्छदनम् । सकेसरकर्णिकं कमलम् । शक्तिमण्डलसङ्घयुक्तं शक्तिसङ्घो वामाद्या नव । मण्डलसङ्घं सूर्यसोमाग्निशक्तिमण्डलानि । एतैर्युक्तं शिवासनं नमामि । तदासनं त्रिविधम् आधिभौतिकाऽऽध्यात्मिकाऽऽधिदैविकभेदेन । तत्राऽऽद्यं ब्रह्मशिलापट्टिकाकमलकण्ठपङ्कजपट्टिकाखल्वपत्रनाळाड्यपीठरूपम् । तदुक्तं शिवतन्त्ररहस्यसारे—

पूर्वं कूर्मशिलायां तु ध्यात्वा शक्तिं निवेशयेत् ।
ब्रह्माख्यायामनन्तं च धर्ममाग्नेयपादके ॥

चरणे नैर्ऋते ज्ञानं वैराग्यं मारुताश्रये ।
ऐश्वर्यं तद्वदीशाने दिक्षु गात्राणि कल्पयेत् ॥

छदनं यदधोऽधस्तात् मेखलायां प्रकल्पयेत् ।
ऊर्ध्वच्छदनमूर्ध्वे तु खल्वपत्रे सरोरुहम् ॥

कर्णिकामुन्नते पृष्ठे वामाद्याः केसरेषु च ।
अष्टौ मनोन्मनीं तत्र मूले लिङ्गस्य योजयेत् ॥

---

१. शक्तिमण्डलसंयुतं प्रणमामि देवशिवासनं इत्यपि पाठः । २. अयमधश्श्लोकः केषां चित्पदानां विशिथिलतया छन्दसोऽननुगुणो वर्तते ॥

पत्राग्रे केसराग्रे च कर्णिकाग्रे च विन्यसेत्।
सूर्याचन्द्रमसोर्वह्नेर्मण्डलानि यथाक्रमं इति।

अत्र कूर्मशिलायां आधारशक्तिः। ब्रह्मशिलायामनन्तः। तदेव भद्रपीठम्। आधारशक्त्यादिक्रमः आधिदैविकम्। कन्दादिक्रमः आध्यात्मिकम्। आध्यात्मिकं द्विधा अवयवरूपः अर्थरूपश्चेति। कालोत्तरे— "मनोन्मनीं कर्णिकायां प्रणवं भद्रपीठकम्। समालिख्य नकारं च मायापद्ममधोमुखम्। विद्यापद्ममुकारं च ह्यूर्ध्ववक्त्रं समालिखेत्। नमस्कारं तथा पीठं शिवलिङ्गमितीष्यते। यकारेणाभियुक्तं च लिङ्ग पीठात्मकं परम्"। इति। पृथ्व्यादिक्रमोऽर्थरूपः। कन्दादिक्रमोऽवयवरूपः। तच्चाभिधातुमारभते—

पृथ्वीकन्दं कालतत्वान्तनाळं
लोकौघं तत्कण्टकं भावसूत्रम्।
ग्रन्थिग्रन्थिं शुद्धविद्यासरोजं
विद्येशानारूढपत्राष्टकं च ॥ १५ ॥
वामादिशक्तिगतकेसरकर्णिकाढ्य-
मर्कादिबिम्बसहितं वरयोगपीठम्।
तत्र स्थितं हृदयमन्त्रगतात्ममन्त्र-
मूर्तिं च बिन्दुगतमीशमहं नमामि ॥ १६ ॥

पृथ्वीति॥ पृथ्वीकन्दं तत्पद्मस्य भूरेव कन्दः। कालतत्वान्तनाळं जलादिकालान्तैकोनत्रिंशत्तत्वनाळम्। तत्कण्टकं लोकौघं भुवनसमूहः। ते अमरेशादिशिखेदान्तद्वात्रिंशसप्ततिलोकाः[1]। भावसूत्रं भावाः पञ्चाशद्विधाः नाळसूत्रम्। भावाश्च साङ्ख्यैः—

"पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात्।
अष्टाविंशतिभेदास्तुष्टिर्नवधाष्टधा सिद्धिः॥

1. पञ्चसप्ततिरिति शिवार्चनाचन्द्रिकायाम्।

अविद्या अस्मिता रागो द्वेषश्चाभिनिवेशनम् ।
क्लेशा विपर्यया: पञ्च तमोमोहादिसंज्ञिता: ॥
ऊहश्शब्दोऽध्ययनं दुःखविघातास्त्रय: सुहृत्प्राप्ति: ।
दानं च सिद्धयोऽष्टौ बुद्धे: पूर्वाङ्कुशस्त्रिविध: ॥
आन्तरदुःखमाध्यात्मं विषाद्यैराधिभौतिकम् ।
आधिदैवं पिशाचाद्यैर्दुःखत्रयमितीरितम् ॥
आध्यात्मिकाश्चतस्र: प्रकृत्युपादानकालभाग्याख्या: ।
बाह्यविषयोपरमात्पञ्च नव तुष्टयोऽभिहिता: ॥
एकादशेन्द्रियवधैस्सहबुद्धिवधैरशक्तिरुद्दिष्टा ।
बाह्या सप्तदशविधा बुद्धेर्विपर्ययात् सिद्धितुष्टीनाम्" ॥ इति ।

ग्रन्थिग्रन्थिं ग्रन्थि: माया । नाळदळयोर्योगस्थानम् । शुद्धविद्यासरोजं शुद्धविद्यातत्त्वपद्मदळम् । अर्कादिविम्बसहितम् अर्कादय: सूर्यसोमाग्निशक्तय: । तेषां बिम्बं मण्डलं तैस्सहितम् । वरयोगपीठं वरं श्रेष्ठं विस्तरपूजाढ्यं योगपीठं शिवासनम् । तत्र स्थितं आसीनम् । हृदयमन्त्रगतात्ममन्त्रमूर्तिं हृन्मन्त्रेणाऽऽद्यन्तयोर्गतात्ममन्त्रेण रचितमूर्तिम् । तदुक्तं कामिके—'हृत्सम्पुटस्त्वजातो वै मूर्तिमन्त्र उदाहृत:' इति । बिन्दुगतं बिन्दुमन्त्रव्यासम् ईश्वराख्यं सकळरूपं नमामि ॥ १६ ॥

इत्थं कन्दाद्यध्यात्मावयवरूपमुक्त्वाऽर्थरूपमध्यात्मपीठं पृथ्व्यादियोजनाप्रमाणेनाभिदधाति—

तत्कन्दं शतकोटियोजनमितं नाळं परार्धान्तकं
ग्रन्थि: कोटिपरार्धपश्चिमसहस्रोऽब्जं च तल्लक्षकम् ।
मूर्तिस्तस्य च कोटिरीश्वरमयी तस्यार्बुदस्यार्बुदां
भोजं मन्त्रमयं सदाशिववपुस्तद्वानमेयश्शिव: ॥ १७ ॥

---

१. बिन्द्वन्त इति पाठभेद: ।

तदिति ॥ तत्कन्दं पद्मकन्दं पृथ्वीरूपम् । शतकोटियोजनमितं नाळम् अनादिकालान्ततत्त्वभुवनाद्याधारतत्त्वरूपं त्रयोदशतत्त्वं तत् । परार्धान्तकं स्थानरूपम् । पृथ्व्या विंशतिस्थानाख्यपरार्धसंख्यान्तकं कालतत्त्वम् । तदुक्तम्—एकं पङ्क्तिशते सहस्रमयुतमित्यादि । क्ष्मातत्त्वं शतकोटियोजनमपः प्रारभ्येत्यादि । अत्र शतकोटियोजना पृथ्वी एकम् । तद्दशगुणा आपः पङ्क्तिः । तद्दशगुणो वह्निश्शतम् । तद्दशगुणो वायुस्सहस्रम् । तद्दशगुणं गन्धादिमानसान्तम् । व्योम अयुतम् । तद्दशगुणोऽहङ्कारो लक्षम् । तद्दशगुणा बुद्धिः प्रयुतम् । तद्दशगुणो गुणः कोटिः । तच्छतगुणा प्रकृतिः पद्मकम् । तच्छतगुणो रागो निखर्वम् । तच्छतगुणा नियतिः महासरोजम् । तच्छतगुणा विद्या महाशङ्खम् । तच्छतगुणा कला महासमुद्रः । तच्छतगुणः कालः परार्धः । तच्छतकोटियोजनपरार्धोर्ध्वमहासमुद्रमहाशङ्खमहासरोजनिखर्वपद्मकोटिप्रयुतलक्षायुतसहस्रशतदशैकान्तयोजननाळस्येत्यर्थः । ग्रन्थिः मायारूपो नाळदळयोस्सन्धिः । कोटिपरार्धपश्चिमसहस्रः कोटिः शतकोटिः । तत्प्रवृद्धपरार्धसंख्यारूपं कालतत्त्वम् । पश्चिम ऊर्ध्वं कालतत्त्वसंख्यासहस्रगुणितो मायाख्यसन्धिरूपः । अनाद्याधाररूपं त्रयोदशतत्त्वं तत्परार्धान्तकम् । शतकोटियोजनमेकस्थानम् । तस्मात्पङ्क्तिशतादिवृद्ध्या परार्धाख्यविंशतिस्थानं यावद्भवति तावत्संख्यापरिमितं नाळम् । सिद्धान्तसारावळ्यां—

एकं पङ्क्तिशते सहस्रमयुतं लक्षं प्रपूर्वायुतं
कोटिश्चार्बुदकं च पद्मकमथो खर्वं निखर्वं तथा ।
बृन्दं चैव महासरोजमपरश्शङ्खस्समुद्रोऽन्तिमो
मध्यं चैव परार्धसंज्ञकमिमां संख्यां विदुः पण्डिताः ॥

अत्रापरश्शङ्खो महाशङ्खः। अन्तिमो महासमुद्रः। तत्रैव—"क्ष्मातत्वं शतकोटियोजनमिति[1]। पृथ्व्या दशगुणा आपस्तोयाद्दशगुणशिखी। वह्नेर्दशगुणो वायुर्वायोर्दशगुणं वियत्। व्योम्नो दशगुणो गर्वो गर्वाद्दशगुणा मतिः। गुणो मतेर्दशगुणः प्रकृतिस्याद्गुणाच्छतम्। प्रकृतेस्स्याच्छतं रागः रागाच्च नियतिश्शतम्। नियतेश्च शतं विद्या विद्यायाश्च शतं कला। कलाशतगुणः कालः कालान्माया शताहता"। तस्माच्छतादूर्ध्वं दशशतसहस्रायुतलक्षप्रयुतकोटिपद्मखर्वमहासरोजमहाशङ्खमहासमुद्रपरार्धाख्यत्रयोदशस्थानसंख्यापरिमितं नाळम्। ग्रन्थिः कोटिपरार्धपश्चिमसहस्रः। कोटिश्शतकोटिः। परार्धो नाळः नाळदळयोरेकादशस्थानयोरूर्ध्वं सहस्रस्थानरूपपद्मग्रन्थिः। तन्मायातत्वम्। पद्मदळनाळयोस्सन्धिरूपा ग्रन्थिः। अब्जं च तल्लक्षकं कन्दनाळग्रन्थीनाम् एकदश[2]शतसहस्रस्थानादूर्ध्वं लक्षस्थानं विद्यातत्वरूपमम्बुजम्। (मायाँ[3] शतगुणा विद्या सहस्रं मायायाः) यद्वा नाळमेकस्थानम्। ग्रन्थिश्शतस्थानम्। ग्रन्थेस्स्थानत्रयेण लक्षाख्यं पद्मम्। (तस्माच्छब्दोऽपि[4] नाळोऽपि योज्यः)। **मूर्तिस्तस्य च कोटिरीश्वरमयी** परार्धोर्ध्वसहस्राख्यग्रन्थिर्दशस्थानम्। तस्य षष्ठस्थानरूपमीश्वरतत्वमयमूर्तिः कोटिस्थानम्। **तस्यार्बुदस्यार्बुदाम्भोजं** कन्दनाळग्रन्थिपद्ममूर्तीनामेकाद्ययुतान्तानामूर्ध्वं सदाशिवतत्वस्य स्थानत्रयम्। शक्तितत्वस्य स्थानपञ्चकम्। अयुताख्यमूर्तिभूतेश्वरतत्वात् सदाशिवतत्वोर्ध्वभूतचतुर्थस्थानमर्बुदम्। तस्यार्बुदस्य[5] अर्बुदपद्ममानं सदाशिवतत्वम्। तस्येश्वरतत्वस्यायुतस्य पञ्चमस्थानमर्बुदम्। पञ्चमस्थानस्य षष्ठमर्बुदम्। दशमं पद्ममित्यर्थः। **मन्त्रमयं** प्रासादस्वरूपम्। **सदाशिववपुः** विद्यादेहम्। **तद्वानमेयशिवः** विद्यादेहवान् अमेयः अपरिमितः। तेनापि

१. योजनमधिष्ठायक इति अशुद्धतया मातृकापाठः। २. एकादश इत्यपि पाठभेदः। ३. कुण्डलान्तर्गतं वाक्यं मातृकान्तरे न विद्यते। ४. इदमपि वाक्यं मातृकान्तरे न वर्तते। ५. तस्य अर्बुदं पद्ममानं इत्यपि पाठः।

सदाशिवतत्त्वं विद्यादेहगम् इत्युक्तम् । योजनाकोटिपरार्धान्तसंहस्रकोट्य-र्बुदस्यार्बुदं पद्ममासनम् । सदाशिवशक्त्याहतशिवव्यापिकां ब्रह्मरन्ध्राव-सानिकां सदाशिवमूर्तिम् इति । अतस्सदाशिवतत्त्वशक्तितत्त्वान्तर्गतभुव-नानां सदाशिवविग्रहेऽन्तर्भावश्चेति । योजनाप्रमाणं च भुवनकोशे—"परमा-णुरजोऽत्यल्पं जालाविष्टार्करोचिषाम् । तदष्टाष्टगुणस्थानेष्वङ्गुलं तत्रिस-ङ्गुणैः । तैरेव गुणितं पाणिः धनुस्तद्वेदलक्षितम् । दण्डो द्वे धनुषी ज्ञेयं क्रोशस्तद्द्विसहस्रकः । द्विक्रोशमाहुर्गव्यूतिं द्विगव्यूतिं च योजनाम्" । इति कन्दादिप्रमाणमुक्तम् ॥ १७ ॥

यस्यामौषधभूषणध्वनिमयी मूर्तिः परा बैन्दवी
ध्येया शङ्करमन्त्रतन्त्रनिरतैर्ज्ञानक्रियाङ्गी शिवा ।
सर्वैश्वर्यसुखप्रदा निरुपमा सादाशिवी निर्मला
नादाख्याय सदाशिवाय महते शान्ताय तस्मै नमः ॥१८॥

यस्यामिति ॥ शङ्करमन्त्रतन्त्रनिरतैः शङ्करमन्त्रः प्रासादः । तन्मन्त्रप्रधानानि तन्त्राणि स्वतन्त्रनिश्वासवातुळकालोत्तरादीनि । तत्रोक्त-नित्यानुष्ठाननिरतैः । **यस्यां** ईश्वरतत्त्वान्तबिन्द्वन्तव्याप्तस्थूलमूर्तौ लिङ्ग-नाहस्वरूपिण्याम् । अविभक्तावयवायामित्यर्थः । **औषधभूषणध्वनि-मयी** औषधं मेधा । भूषणं बिन्दुः । ध्वनिः नादः । एभिर्विरचितपादा-द्यवयवा । तदुक्तं श्रीमत्स्वतन्त्रे—"नादं किरीटमित्युक्तं बिन्दुवक्रमुदा-हृतम् । हकारं हृदयं प्रोक्तं औकारो बाहुकद्वयम् । षष्ठं पादद्वयं विद्या-न्मन्त्रमूर्तिं सदाशिवम्" । इति । हकारोपरि स्थितत्वात् सूक्ष्मरूपः औकार इति । शुद्धाख्ये—"हकारं हृदयं प्रोक्तं ध्वजशृङ्गभुजद्वयम्" । इति । बिन्द्वर्धचन्द्रौ शृङ्गौ स्यात्पादस्सीरद्वयं भवेदिति स्मारे । अत्र निष्कळ-प्रासादस्य षष्ठरहितत्वात् षष्ठेन पादक्लृप्तेर्नावकाशः । किञ्च सकलमन्त्र-

---

१. सहस्रकोट्यर्बुदं इत्यपि पाठः । २. मन्त्रं सदाशिवस्य तु इत्यपि पाठः ।

सदाशिवस्य पादाद्यवयवोऽस्ति। निष्कळमन्त्रवाच्यसदाशिवस्य पादाद्यवयवो नास्तीति वक्तुमप्ययुक्तम्। सद्योमूर्तिः पुरेशाननहृदयपद इति वक्ष्यमाणत्वात्। तस्मान्मेधास्थिताकारेण पादो योज्यः। किञ्च मेधावयवाकाररहितायां सत्यां प्रणव एव भवति। तदा औकारं बाहुकद्वयं इति श्रुतेर्विरोधः। तस्मादेवमेवात्र सम्प्रदायः। ब्रह्मणां शरीरत्वात्सकळत्वम्। तस्मात्सकळप्रासादो ब्रह्माङ्गाक्षरैर्मिश्रीकृत्योद्धार्यः। निष्कळप्रासादो अङ्गाक्षरैरेवोद्धार्यः। त्रिमात्रश्च द्विमात्रश्चेत्यादिमात्रानियमाद्धृदयबीजं प्लुतं प्लुतत्वादाकारत्रययुक्तः द्विमात्रत्वाच्छिखादीर्घः। शिखामात्रतृतीयाकारयोगान्मेधाप्रथमाकारः पादः। स्वाहाकारोऽन्त्यकलाद्वयं ज्येष्ठावामावाचकसीररूपः। अकारश्च हकारश्च द्वावेतावेकसंस्थितौ। विभक्तिर्नैवेति। बिन्दुद्वयान्तराळस्थसीराभो नादः अधोमुखो मकुटं बिन्दुमुखवृत्तं अर्धचन्द्रोऽधोमुखः। फालं निरोधि प्रमाणं शक्तिनादबिन्दुरौद्रीवामाभिधानं द्विर्वृत्तार्धचन्द्रकौटिल्यदण्डाकारोर्गळनाभोदीर्घगळदीर्घो वामगळाद्दक्षांसो दक्षांसादिकट्यन्तः कटेस्तिर्यग्वामोरुमूलान्तः वामजानुं तु ज्येष्ठवामजङ्घावामा एवं वामावर्तेन गळादिपाददक्षिणपादान्तं प्रासादकलाष्षडपि योज्याः। शृङ्गध्वजस्थबिन्दुस्तनौ। शृङ्गध्वजस्थार्धचन्द्राभ्यां स्तनपीठाद्यन्तं ध्वजस्थसीरद्वयाभ्यां बाहूपबाहुप्रासादकलानां स्थूलानां रेखारूपाणां प्रस्तारनियमश्चाप्युक्तः। आकाशात्सम्भवा रेखा इति। आकाशात्सम्भवा रेखा वृत्तं तदवयवरूपत्वात्। वह्निस्त्रिकोणं तन्मण्डलरूपत्वात्। संशृङ्गपादो ध्वजः तदधोमुखाकारशृङ्गमित्यर्थः। बिन्द्वर्धचन्द्रौ शृङ्गस्स्यात् पादस्सीरद्वयं भवेत् इति। एवंभूता मूर्तिरौषधभूषणध्वनिमयी। परा सर्वोत्तीर्णा। बैन्दवी बिन्दुसम्भूता। बिन्दोस्सूक्ष्मापश्यन्तीमध्यमावैखरीरूपवाग्विशेषाणां समवायरूपः प्रासाद इत्यर्थः। ज्ञानक्रियाङ्गी अणुसदाशिवानां ज्ञानक्रियाव्यक्तिहेतुशरीररूपा। शिवा शुद्धा दुःखमोहादिविधुरेत्यर्थः। सर्वैश्वर्यं अणिमाद्यष्टैश्वर्याणि। निरुपमा सर्वातिशयैश्वर्यवत्वात्। निर्मला

सर्वज्ञतादिगुणहेतुत्वात् । एवं ध्येया मूर्तिः तदेव नादाख्यं बीजम् । तद्बीजस्वरूपाय सदाशिवाय महते शान्ताय तस्मै नमः ॥ १८ ॥

ध्येयस्सदा गगनमण्डलमध्यवर्ती
निर्विघ्नशुद्धशिवयोगिहृदम्बुजस्थः ।
ईशोर्ध्वनिष्कळशिवान्तवपुस्सदेशो
बिन्दुस्स्वरोद्भवकलाभुवनेशगर्भः ॥ १९ ॥

ध्येय इति । गगनं हकारः । तस्य मण्डलं शक्तिनादबिन्द्वक्षरम् । निर्विघ्नः उक्ताचारपरः । शुद्धः दीक्षितः । शिवयोगी योगस्सन्नहनोपाय-ध्यानसङ्गतियुक्तिषु इत्यमरः । तद्धृदयरूपमम्बुजं शुद्धविद्या । तत्र स्थः ईशः ईश्वरतत्त्वाख्यस्थूलमूर्तिः । तदूर्ध्वं निष्कळशिवान्तवपुः सदाशिव-शक्तिशिवतत्त्वान्तवपुः । ध्यायिनो वरैः पुष्णातीति वपुः । बिन्दु-स्वरोद्भवकलाभुवनेशगर्भः । तदुक्तं मृगेन्द्रे—"ईशानतीत्य शान्तान्तं तत्त्वं सादाशिवं मुने । भुवनान्यपि नादादिकला नान्यः पतिश्शिवात्" इति ॥ १९ ॥

योऽसावीशानमूर्धा नरमुखकमलोऽघोरहृद्वामगुह्य-
स्सद्योमूर्तिः पुरेशाननहृदयपदष्षड्विधाध्वस्वरूपः ।
भूताम्भोराशिसिद्धिस्मरभुजगकलाक्लृप्तदेहः क्रियेच्छा-
दृग्भासार्धाम्बकं तं कबिलगतमहं नौमि विद्याशरीरम् ॥ २० ॥

योऽसाविति । औषधभूषणध्वनिमयीति आध्यात्मिकशब्दाऽऽधिभौ-तिकलिपिप्रस्तारावयवं चोक्त्वा ईशोर्ध्वनिष्कळेत्याद्याधिभौतिकावयवं चोक्त्वा अधुना आधिदैविकावयवमभिधत्ते । यः आधिभौतिकाध्यात्मभिन्नविद्या-शरीरः । असौ आधिदैविकक्रमेण । ईशानमूर्धा नरमुखकमलः अघोरहृद्वामगुह्यः वामदेवगुह्यः । सद्योमूर्तिः सद्योजातमूर्तिः । एभिः पदब्रह्मभिः बीजब्रह्मादिभिर्नमोऽन्तैः दण्डभङ्गिक्रमेण विन्यस्त

**पुरेशाननहृदयपद:** पुरं शरीरं तस्येशो मूर्धा वरश्शरीरं श्रेष्ठमित्युत्तमाङ्गम् । तेन मूर्धा । आननं मुखम् । हृदयपदेन हृदयगुह्ये विवक्षिते उभयत्रापि शब्दोत्पादककुण्डलिनी विद्यमानतया । तदुक्तं— 'चन्द्राग्निरविसंयुक्ता ह्याद्या कुण्डलिनी तु या । हृत्प्रदेशे तु सा ज्ञेया' इति । 'वस्तिश्चतुष्कलापत्रकमलस्तेजसां निधिः । नाडीमूलावृताङ्गा हि कुण्डलिनी हंसनिस्स्वना' । इति । पदः पादः **षड्विधाध्वस्वरूपः** तदुक्तं - षड्विधोऽध्वा कलातत्वभुवनवर्णपदमन्त्राः । तदवयवः तदुक्तम् — "'ईशानशान्त्यतीताकं शान्तिपुंवक्रपङ्कजम् ! घोरविद्याहृदं वामप्रतिष्ठागुह्यमन्यतः । सद्यो निवृत्तिजान्वङ्घ्रि भुवनाध्वतनूरुहम् । वर्णत्वङ्मन्त्ररुधिरं पदमांससिराचितम् । तत्वास्थिमज्जाशुक्रादिपद्मासनस्थदिग्भुजम् " । इति । **भूताम्भोराशिसिद्धिस्मरभुजगकलाक्लृप्तदेहः** भूतानि पञ्च अम्भोराशिश्चतुस्समुद्राः । सिद्धिः ऐश्वर्याणि अष्टौ । स्मरः त्रयोदश्यधिपतिः कामत्वात्रयोदशसङ्ख्या । "वह्निब्रह्माम्बिकेभास्यनागस्कन्दार्कशूलिनाम् । दुर्गायमेन्द्रगोविन्दस्मरशम्भुसुधाभुजाम् ॥ प्रतिपदं समारभ्य यावत्पञ्चदशीक्रमात्" । इति । भुजगो नागा इत्यष्टौ एवंविधकलाभिरष्टत्रिंशद्भिः क्लृप्तदेहः । तदुक्तम् —"ईशानस्य कलाः पञ्च पुरुषस्य चतुष्कलाः । अघोरस्य कलाश्चाष्टौ वामदेवे त्रयोदश । सद्योजातकलाश्चाष्टौ अष्टत्रिंशत् कलास्स्मृताः" । इति । **क्रियेच्छाद्दङ्मासार्धाम्बकं** मासार्धः पञ्चदश । अम्बकं नेत्रम् । प्रतिवक्त्रमिच्छाज्ञानक्रियारूपं त्रिलोचनमित्यर्थः । तं सदाशिवं **विद्याशरीरं** विद्यादेहरूपं **कविलगतं** ब्रह्मरन्ध्रगतं नौमि । विद्यादेहं करन्ध्रान्तं प्लुतमुच्चार्य सुप्रभम् इति तेनैव तत्र ॥ २० ॥

**श्वेतासृक्कृष्णपीतस्फटिकशशिसुवर्णारुणाळ्यग्निवर्णैः**
**ब्रह्माङ्गैर्व्यक्तमूर्तिर्भवहरशिवसंयोगतस्स्फाटिकाभः ।**

---

१. नाभिमूलाहृदाङ्गा हि इति पाठभेदः ॥

ऐक्यान्मन्त्रार्थयोरित्यखिलशिवमतेष्वाह सर्वार्थहेतु-
र्वक्त्राणां वर्णभेदश्चिदचिदधिपतेश्चित्रमेतत्स्वरूपम् ॥ २१ ॥

श्वेतेति । **श्वेताम्रकृष्णपीतस्फटिकशशिसुवर्णारुणाळ्यग्निवर्णैः ब्रह्माङ्गैः** । असृक् रक्तम् । स्फटिकं श्वेतम् । शशि श्वेतम् । सुवर्णं पीतम् । अळि कृष्णम् । अग्निः रक्तम् । श्वेतरक्तकृष्णपीतासितपश्चिमोत्तरदक्षिण-पूर्वमध्यवदनरूपसद्यादिब्रह्मभिः सितपीतरक्तकृष्णरक्तहृदयादिकरान्तन्यस्त-हृदयाद्यङ्गैस्सहितो **व्यक्तमूर्तिः** रुद्रसदाशिवभट्टारकः । द्वादशान्तनिष्कळ-सदाशिवमन्त्रविन्यस्तव्यापकपरमशिवस्य निर्मलसदाशिवभट्टारकपरमशिवस्य सकळमूर्तिरूपः । **भवहरशिवसंयोगतः** मोक्षप्रदनिष्कळशिवसम्पर्कात् । **स्फाटिकाभः** सितरूप एव । तदुक्तं तेन—परावाहनरूपेण सपिण्डित-शुद्धस्फटिकनिभस्य याज्ययाजकस्यापि परमशिववत् शुद्धस्फटिकनिर्मलत्वं सिद्धमेवेति । तथाऽपि **अखिलशिवमतेषु** परमेश्वरस्सर्वागमेषु । **वक्त्राणां** वक्त्ररूपसद्यादीनाम् । **वर्णभेदः** श्वेतरक्तमन्त्रास्सद्यादयः । अर्थादेध्यायित्व-सृष्ट्यादयः । तयोः **मन्त्रार्थयोरैक्यात्** शब्दार्थयोरेकवद्भावेन । **सर्वार्थ-हेतुः** सर्वेषां परिणतमलपक्वापक्वकर्मणाम् आत्मनामर्थः प्रयोजनं सृष्ट्यादि-पञ्चकृत्यं तद्धेतुः । **इत्याह** 'प्रसन्नत्वं यदीशस्य स्तैमित्वं पुरुषस्य च । चण्डत्वं बहुरूपस्य मुक्तिस्थित्यन्तहेतुकम् ॥ विलोभनत्वं वामस्य ध्यायित्वं यदजस्य तु । तिरोभावोद्भवार्थन्तु सर्वार्थं सामुदायिकम्'॥ इति । 'मुक्त्यर्थं स्फटिकाकारं प्रसन्नं चेतसा स्मरेत् । ईषत्प्रहसितं पीतं गर्वितं स्तम्भनादिषु । अघोररूपमसितं[1] जटामुण्डाहिभूषणम् । क्षयादिषु तिरोभावे सुरक्तं चाङ्ग-मण्डनम् । जनेन सर्वभावानां ध्यानासक्तमनुस्मरेत्' । इति । **चिदचि-दधिपतेः** चितोऽणुरूपरुद्रस्य सदाशिवस्य अचितां स्थूलसूक्ष्मपररूपप्रासा-दाधिष्ठातृलिङ्गमूर्तिविद्याशरीराणामधिपतेः कर्तुः । **एतत्स्वरूपं** विद्याशरीरं **चित्रं** नानाविधं श्वेतरक्तादिरूपेण ॥ २१ ॥

---

1. कराळमसितं पीतं इति पाठभेदः ।

ईशानेन वियन्मयेन धवळप्रख्येन सर्वप्रभोः
व्याप्तं वक्त्रचतुष्टयं पुरुषहृद्रुह्याजमन्त्रात्मकम् ।
तेनेदं धवळप्रभं शिवविदः पूर्वादिकाष्ठाभृतां
वर्णानुग्रहहेतुतः प्रतिमुखं पीतादिवर्णं विदुः ॥ २२ ॥

ईशानेनेति । पूर्वमाधिदैविकक्रमेणाधिष्ठातृभावानुरूपं वर्णं निश्चित्याधिभौतिकवक्त्राणामपि वर्णभेदवासनां वदति । सर्वप्रभोः विभोः परमेश्वरस्य पुरुषहृद्रुह्याजमन्त्रात्मकं वक्त्रचतुष्टयं धवळप्रभं शिवविदः शिवागमार्थतत्वज्ञाः । पूर्वादिकाष्ठाभृतां पूर्वदक्षिणपश्चिमोत्तरदिग्पतीनामिन्द्रान्तकवरुणकुबेराणां । वर्णानुग्रहहेतुतः पीतकृष्णश्वेतारुणानां वर्णानामनुग्रहहेतुतास्स्थिरत्वार्थम् । प्रतिमुखं प्रतिवक्त्रं प्रतिबिम्बरूपेण पीतादिवर्णमासीदिति विदुः । तदुक्तं पराख्ये—

आकाशमूर्ध्वतश्शुक्लमिति श्वेतं तु विन्यसेत् ।
प्राग्दिश्यप्यपरं वक्त्रमिन्द्रच्छायापरिष्कृतम् ॥

अघोरं दक्षिणे देशे कृष्णमन्तकरुक्स्थितम् ।
वामं चोत्तरतो रक्तं कुबेरकिरणारुणम् ॥

सद्यं पश्चिमदिग्भागे विमलं वरुणच्छविम् । इति ।

अत्र कुबेरकिरणारुणमित्युक्तत्वात् कुबेरस्य रक्तत्वमेव साध्यते । स्वर्णच्छायं गदाहस्तम् इति ध्यानरत्नावळ्याम् । 'गदाङ्कं श्वेतमश्वस्थं यक्षराजानमुच्चरे' इति कामिके । तस्मात्कुबेरस्य रक्तपीतसितवर्णध्यानेऽपि राजसाख्यरक्तवर्ण एवाङ्गीकर्तव्यः । राजसस्तु स्थितिः । स्थितिकर्ता वामदेवः । तस्मात् ॥ २२ ॥

ईशतत्पुरुषाघोरवामाजवदनं शिवम् ।
बालयौवनवृद्धस्त्रीनराकारं नमाम्यहम् ॥ २३ ॥

ईशेति । अजः सद्योजातः । यथाक्रममीशानादीनां बाल्यादिभावः । अत्र शिवो द्विविधः । सुरनरभेदेन । नरा द्विविधाः । स्त्रीपुंरूपाः । पुमान् ब्रह्मा दक्षिणभागत्वात् । ब्रह्ममूर्तेरधिष्ठातृत्वात्सद्यस्य नराकृतित्वम् । स्त्री विष्णुः वामभागाधिष्ठानाच्च विष्णोरधिष्ठातृत्वात् वामदेवस्य स्त्रीरूपत्वम् । सुरो रुद्रः नराणामीशो रुद्रत्वात् । त्रिधा[1] शक्त उद्युक्तः प्रवृत्त इति । शक्तादयश्चेशानाद्याः । शक्तो बालः मुकुळगतगन्धवदन्तर्गतसर्वशक्तित्वात् । उद्युक्तो युवा । विकस्वरप्रादुर्भावात् गन्धपुष्पवदुद्युक्तशक्तित्वात् विकसितव्याप्तगन्धवत् । प्रवृत्तस्सर्वशक्तित्वात् प्रवृत्तो वृद्धः । वृद्धशब्दः प्रौढपर्यायः मुक्तबद्धयोरधिष्ठात्री शिवशक्तिरेकैव बाल्याद्यवस्थारूपेण रूपिता । अणुपक्षस्य बाल्याद्यास्स्वभावाः ॥ २३ ॥

त्रिशूलखट्वाङ्गधरस्सशक्ति-
वराब्जहस्तोभयपाणिरीशः ।
सेन्दीवराहिर्डमरुप्रसक्त-
स्सबीजपूरस्सुभगोऽक्षसूत्री ॥ २४ ॥

त्रिशूलेति । खट्वाङ्गः खट्वापादोर्ध्वे नरमुखयुक्तः आयुधविशेषः । शक्तिः अग्नेरायुधं । वरः अधोमुखपताका । वरसंज्ञश्चाब्जसदृशहस्तो वराब्जहस्तः । अभयं ऊर्ध्वमुखपताका । इन्दीवरं नीलोत्पलम् । अहिः सर्पः । डमरुः तुड्याख्यः क्षुद्रदुन्दुभिः । बीजापुरः मातुळङ्गफलम् । अक्षसूत्रम् अक्षमाला । अत्र दक्षिणवामक्रमश्शस्त्राणामेवेति केचित् । तदप्ययुक्तम् । "खट्वाङ्गमुत्पलं नागमभयं बीजपूरकम् । वामभागेऽथ वरदं शक्तिशूलाक्षसूत्रकम् । डमरुं च करैर्बिभ्रत्काथितस्ते शतक्रतो" । इति मोहशूरोत्तरोक्तत्वात् । एवंविधनियमोऽप्ययुक्तः । ग्रन्थकर्तुरनभिमतत्वात् । तदुक्तं तेन बृहत्कालोत्तरेतिप्रमाणेन—'दक्षिणे वरमोङ्कारं बीजपूरं तु वामतः । खट्वाङ्गं

---

१. क्रियाशक्तोद्युक्तप्रवृत्त इति मातृकापाठः ।

डमरुं तद्वत्तद्वत्त्रिशूलभोगिनौ । अभीनीलोत्पले तद्वत्तद्वच्छक्त्यक्षसूत्रके । समानतन्त्रोक्तत्वादेतत्क्रम एव वरः । शक्त्यभीशूलखट्वाङ्गवरव्यग्रकराम्बुजम् । दक्षिणेऽतोऽथ वामस्थैर्डमरुं बीजपूरकम् । नागाक्षसूत्रनीलाब्जं बिभ्राणं पञ्चभिः करैः' । इत्युक्तध्यानरत्नावलीग्रन्थस्यापि शक्त्यादीनां डमरुकादिभिः प्रत्यायुधस्य विशेषश्रुत्यभावात् "दक्षिणे वरमोङ्कारम्" इत्यादिपक्षोऽङ्गीकर्तव्यः । 'दक्षिणे परशुं खड्गं शूलं वज्रं च पावकम् । वाम भागेऽभयं घण्टां नागं पाशं तथाङ्कुशम् '। इति सोमशम्भुः[1] । 'खड्गखेटधनुर्बाणखट्वाङ्गं नृकहस्तकम्[2] । कुण्डिकामक्षमालां च वरं चाभयमेव च । रूपं भूतेशवर्यस्य ध्यायेद्धोमेऽर्चने[3] यजेत्' । इति श्रीमन्मृगेन्द्रे । 'नीलनीरजनागं[4] च खट्वाक्षवलयाभयम् । त्रिशूलं च हरस्योक्तं दक्षिणे पञ्च बाहवः । बीजापूरं धनुश्चैव वरदण्डकमण्डलुम् । वामे तु देवदेवस्य बाहवः पञ्च कीर्तिताः' इति शिवतन्त्ररहस्यसारे । एवंविधध्यानं रुद्रसदाशिवभट्टारकस्येत्यनेनोपेक्षितः । तदुक्तं तेन—अत्र सर्वाध्वसम्भवब्रह्मविष्णुरुद्रेश्वरसदाशिवशक्तिवैनतेयार्चितनागेशकैवल्यसर्वतत्त्वेश सर्वभुवनेशसर्ववर्णेशपदेशकलेशाभिधानास्सदाशिवा बहवो विद्यन्ते । एते ईशोर्ध्वनिष्कळसदाशिवान्त[5]रुद्रसदाशिवभट्टारकस्य भेदाः । पुनश्च मन्त्रभेदेन सदाशिवा बहवो विद्यन्ते । एते निष्कळशिवाधिष्ठिताश्च । एतेषां मध्ये रुद्रसदाशिवः शैवैः पूज्यः । रुद्रसदाशिवस्वरूपमाह—"शक्तिधृक्च्छूलखट्वाङ्गवरदाभयबाहुमान् । पूराक्षडमरुव्याळोत्पलः प्राग्वत्सदाशिवः ।" इति ॥ २४ ॥

इत्थमाधिभौतिकदेहाध्यात्माणुसदाशिवस्वरूपमभिधायाऽऽधिदैविकाधिष्ठातृशिवस्याऽऽयुधानां सहजशक्तिविलसतामभिदधाति—

---

१. अयं श्लोकः सोमशम्भुपद्धतौ न विद्यते । २. नृकपालकं इत्यपि पाठः । मृगहस्तकं इत्यपि पाठः । ३. होमार्चनः इति पाठभेदः । ४. नाराचखड्गाक्ष इत्यपि पाठः । ५. निष्कळशिवान्त इत्यपि पाठभेदः ।

**बोधानन्दमयी विभोर्भवभयप्रध्वंसकृच्छक्तयः**
**तिस्रस्ताः परिणामतश्च विवृतिर्निश्शेषबीजस्य हि ।**
**तत्पूर्णं प्रकृतिः कलाद्यभिमुखी दीर्घाक्षसूत्रं मन-**
**श्शम्भोरस्त्रनिकाय आगमपरैर्ज्ञेयः परो नापरः ॥ २५ ॥**

बोधेति । **बोधानन्दमयी** ज्ञानानन्दरूपिणी । ज्ञानशक्तिरेव शक्तिः सा लयतत्त्वाख्या सादाख्यं बोधावस्था । **भवभयप्रध्वंसकृत्** । स्वपद-प्राप्तानां पुनरावृत्तिभयाभावात् अभयत्वं । **शक्तयस्तिस्रः** इच्छाज्ञानक्रिया-रूपाः । एष्टव्यज्ञातव्यकर्तव्यरूपैरुपहितं त्रिशूलम् । अधिकारावस्था-रूपिणी शक्तिरेव त्रिशूलमित्यर्थः । **ताः परिणामतश्च** ताः इच्छाज्ञान-क्रियाख्याश्शक्तयः स्वोपादानकुण्डलिन्या खट्वारूपया अङ्गिन्या नादबिन्दु-स्वरूपशिवशक्तिसदेशविद्याङ्गस्य परिणामकरी शक्तिः खट्वाङ्गम् । शुद्धतत्त्व-प्रवर्तिका शक्तिः खट्वाङ्गमित्यर्थः । **विवृतिर्निश्शेषबीजस्य** निश्शेषं निखिलं बीजमित्यात्मा । निमित्तबीजम् उपादानबीजं फलबीजं चेति बीजं त्रिविधम् । आद्यं ईश्वरः । द्वितीयं माया । ईश्वरेण मायासमुत्पादितानां फलरूपभोगानां भोक्तृबीजतया भोक्त्राख्यं बीजमित्यात्मा । तस्य कलादि-द्वारेणाभिमतसम्पादनार्थं यया शक्त्या ज्ञानक्रिययोर्विवृतिर्जायते सा शक्ति-र्वरदम् । आत्मनः कर्मानुरूपाभिमतभोगप्रदा शक्तिर्वरदमित्यर्थः । **तत्पूर्णं** तत् बीजं बीजानामात्मनां देहेन्द्रियाद्यापूरणं मायातत्त्वम् । तत्प-वर्तिका शक्तिर्बीजपूरमित्यर्थः । **प्रकृतिः** माया । यथा शब्दविकार-कारणं डमरुस्तथा कलादिविकारकारणं माया डमरुः । क्षुब्धमायाध्व-प्रवर्तिका शक्तिः डमरुरित्यर्थः । **कलाद्यभिमुखी दीर्घा** तदेव कलाद्या-कारपरिणतम् । सर्पदष्टस्य विषाकुलितत्त्ववत् स्वलिङ्गितस्य विषयाकुलि-तत्त्वसम्पादनात् नाग इव नागः । कलादिजनितविषयप्रवर्तिका शक्तिर्नाग-इत्यर्थः । **अक्षसूत्रं** अक्षाणामिन्द्रियाणां स्वविषयपाटवम् । इन्द्रियाणि-दश । तदाधाराणि स्थूलभूतानि पञ्च । तत्प्रवर्तकानि सूक्ष्मभूतानि श्रोत्रादि-स्थानगतानि पञ्चभूतानि । पूरका मात्राः पञ्च । एषां पञ्चविंशतीनां

प्रवर्तिका शक्तिरक्षमाला। मनः इन्दीवरस्येव प्रवृत्तिनिवृत्तिरूपसङ्कोचविकासधर्मत्वान्मनस्तत्प्रवर्तिकाशक्तिरिन्दीवरम्। एवं अस्त्रनिकायः परश्शक्तिरूपः शम्भोरागमपरैर्ज्ञेयः। नापरः। शिवस्यास्त्रगण इन्द्रायुधवह्निसात्मकः। तदुक्तं तेन चतुर्विंशतिसहस्रकालोत्तरे—

बोधरूपा पराशक्तिस्सादाख्यमभयं स्मृतम्।
इच्छाज्ञानक्रियारूपं त्रिशूलं संव्यवस्थितम्॥

ता एव परिणामेन खट्वाङ्गमपि साङ्गिनम्।
बीजानां विवृतिस्तेषां पूरणाद्बीजपूरकम्॥

मायाडमरुरूपेण सैव दीर्घाद्रिजिह्वकः।
इन्दीवरं मनः प्रोक्तमिन्द्रियाण्यक्षमालिका॥ इति।

अत्र मन्त्रसिंहासनारूढं पञ्चास्यं दशदिग्भुजमित्युक्तत्वादणुसदाशिवस्य दिक्पालायुधसामान्यतामेवेति योजयन्त्यन्ये। तद्यथा—शक्तिरग्नेरस्त्रम्। शूलमीशानस्य। वरदः अधोमुखपताकाभृत्त्वाद्वायोः। खट्वाङ्गं गदाकारत्वात्कुबेरस्य। अभयं वैष्णवं स्थितिमूर्तित्वात्। तथाच—'शङ्खचक्रधरां वामे दक्षिणे सगदाभयाम्'। इति डमरुः यमस्य अघोरायुधत्वात्। यमाधिष्ठितः अघोरः। नागः पाशत्वाद्वारुणम्। अक्षसूत्रं ब्राह्मम्। बीजपूरं वज्रं च नानाविधवर्णत्वादैन्द्रम्। नीलाब्जं सितश्यामतया नैर्ऋतम्॥ २५॥

ईशानं सर्वासां विद्यानामीश्वरं च भूतानाम्।
ब्रह्माधिपतिं ब्रह्मत्वान्निष्कळरूपं सदाशिवं नौमि॥ २६॥

ईशानमिति। सर्वासां विद्यानां कामिकादिशिवज्ञानानाम्। यद्वा लौकिकवैदिकाध्यात्मादिमार्गमन्त्रशास्त्राणाम्। तदुक्तं कामिके—

सद्यमन्त्राद्विनिष्क्रान्तो ब्रह्मनामाखिलार्थदृक्।
तेनेदं लौकिकं शास्त्रं सर्वलोकेऽवतारितम्[1] ॥

शब्दशास्त्रमलङ्कारं निरुक्तं छन्द एव च। इत्यादि।
वाममन्त्राधिपो विष्णुः कारणेशो द्वितीयकः।
तेन वैदिकमुद्दिष्टमष्टादशपुराणकम् ॥
धर्मशास्त्रं च वेदान्तं पाञ्चरात्रं च बौद्धकम्।
रुद्रोऽघोराद्विनिष्क्रान्तस्त्वध्यात्मं च प्रगीतवान् ॥

न्यायं वैशेषिकं सांख्यं सेश्वरं यत्प्रगीतवान्।
ईश्वरः पुरुषाज्जातस्त्वतिमार्गं प्रगीतवान् ॥

पञ्चार्थं लाकुळं चान्यत्तथा पाशुपतं मतम्।
सदाशिवोऽपि भगवान् मन्त्रतन्त्रमपालयत् ॥ इति।

अभिषेकपटले तत्रैव तन्त्रावतारे—

सद्यवाममहाघोरपुरुषेशानमूर्तयः।
प्रत्येकं पञ्चवक्त्रास्सुस्तैरुक्तं लौकिकादिकम् ॥

सिद्धान्तो गारुडो वामो भूततन्त्रं च भैरवम्।
ऊर्ध्वपूर्वकुबेराप्ययाम्यवक्त्राद्यथाक्रमम् ॥ इति।

**सर्वभूतानाम्**। लौकिकादिशास्त्रोक्तकर्मजनितशरीराणाम्। **ईश्वरं** सृष्टिकर्तारम्। **ब्रह्माधिपतिम्**। ब्रह्मणां बीजपदपादार्थिकतत्वब्रह्ममूर्तिब्रह्मणां पतिम्। तथा शुद्धाख्ये—"मूर्तिब्रह्म तथा पूर्वं तत्वब्रह्म द्वितीयकम्। भूतब्रह्म तृतीयं स्यात् पिण्डब्रह्म चतुर्थकम्। पञ्चमं तु कलाब्रह्म पञ्चब्रह्म उदाहृतम्"। साकल्यादिपञ्चप्रणवं मूर्तिब्रह्म। शुद्धमूलं तथा तत्वमादिरात्मेति पञ्चधा प्रासादाः तत्वब्रह्म। लवरयहकारा भूतब्रह्म। स्वबीजजातब्रह्माणि पिण्डब्रह्म। ईशानस्सर्वविद्यानामिति कला-

---

१. सर्वलोकैकसम्मतं इत्यपि पाठभेदः।

ब्रह्म। ईशानमूर्धायेत्यादि पदब्रह्म। दशाक्षरसहस्राक्षरादिव्योमव्यापिभेदेन पदब्रह्माणि बहुधेत्यर्थः। ब्रह्मत्वात् सर्वव्यापकत्वात्। तदुक्तं—'बृहत्वाद्ब्रह्मणत्वाच्च ब्रह्म सादाशिवी तनुः'। इति। निष्कळरूपं सदाशिवं नौमि। ईशानब्रह्मणः पञ्चवक्त्रस्य ईशानाद्यस्य सर्वविद्येशानसर्वभूतेश्वरब्रह्मशिवसदाशिव इति नामानः। कारणे—"ईशानश्चेश्वरो ब्रह्मा शिवश्चेति सदाशिव" इति। तेषां मन्त्राः—'ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्' इति मन्त्राः ॥ २६ ॥

तत्पुरुषं भक्तानां शैवज्ञानप्रदं महादेवम्।
रुद्रं शिवत्वसिद्ध्यै तत्वप्रेरकमहं वन्दे ॥ २७ ॥

तदिति। तत्पुरुषं भक्तानाम्। तस्मिन् पुरि देहे वसतीति सदा निवसतीति तत्पुरुषः तम्। तथा श्रीमन्मृगेन्द्रे—'तस्य तस्य तनुर्या पूस्तस्यामुषति येन सः' इति। देवशब्दो व्यवहारे वर्तते। दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु इति धातुः। महाव्यवहारकत्वात् शैवज्ञानप्रदम्। शिवत्वसिद्ध्यै रुद्रम्। रुजं संसारजं दुःखं द्रावयतीतिरुद्रः तम्। तत्वप्रेरकम्। तत्वानां पृथिव्यादिशिवान्तानां स्वस्वविषये प्रेरकम्। तत्पुरुषब्रह्माणि पुरुषाद्याननचतुष्टयस्य तत्पुरुषः महादेवः रुद्रः प्रचोदयात् इति नाम तेषाम्। तथा किरणे—'तत्पुरुषो महादेवो रुद्रश्चेति प्रचोदया'दिति। 'तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदया'दिति मन्त्राः। त एव तत्पुरुषकलामन्त्राः। तानत्र नौमीति तात्पर्यम् ॥ २७ ॥

अथ घोरमघोरं पशुपाशनिराकरणं घोरघोरतरम्।
सर्वस्माच्छरणमहं शर्वं बहुरूपिणं वन्दे ॥ २८ ॥

अथेति ॥ अघोरम्। घोररहितं सौम्यम्। अथघोरं अथशब्दो मङ्गले। "मङ्गळानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः। घोरं

उग्रं मङ्गळार्थमुग्रम्। अयमभिप्रायः। संहारकर्ताऽघोरः। संहारोऽपि प्राणिनां त्याज्यदेहत्यागेन सुखप्राप्तेर्विद्यमानतया सुखार्थ एव। यथा चिकित्सको दुष्टग्रन्थीनां छेदनदहनादिभिर्व्यसनयन्नपि ततस्तद्ग्रन्थिजनित-दुःखनाशेन देहिनां सुखप्रदो भवति तथेति भावः। **पशुपाशनिराक-रणम्**। तस्य पदस्यार्थद्वारेण रुद्रपदं विवक्षितम्। **घोरघोरतरम्**। घोराणां पाशानां घोरतरं मृत्युग्ररूपम्। सर्वप्रकारेण भयविनाशकं **बहुरू-पिणम्**। अधिष्ठातृभावेनानेकरूपम्। तदुक्तं मृगेन्द्रे—"वपुषो विद्य-मानत्वाद्यद्यत्कृत्यं करोति सः। तत्र तत्रास्य तत्कर्तृवपुषानुकृतं वपुः"। इति। एवंभूतं शर्वं वन्दे। **सर्वस्मात्** इति सर्वेभ्यः पदं च सर्वत इति पदं च। **वन्दे** इति नमस्ते अस्तु इति पदम्। **बहुरूपिणम्** इति बहुवचनयुक्तरूपपदमिति रूपेभ्यः पदं च विवक्षितम्। अघोरमन्त्रस्य अघोरः अथघोरः घोरघोरतरः सर्वतः शर्वः सर्वः रुद्रः बहुरूपः इत्यष्ट-मूर्तयः। तथा कारणे—"अघोरश्चाथघोरश्च घोरघोरतरस्तथा। सर्वतश्श-र्वसर्वौ च रुद्रश्चाघोरकस्य तु" इति। तेषाम् अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यश्च। सर्वतश्शर्वसर्वेभ्यो[1] नमस्ते अस्तु रुद्ररूपेभ्यः। इति मन्त्रादिः। त एवाघोरकलामन्त्राः तान्नौमीति तात्पर्यम्॥ २८॥

वामं ज्येष्ठं रौद्रं कलविकरणं बलविकरणं कान्तम्।
बलप्रमथनं सर्वभूतदमनं मनोन्मनमहं वन्दे॥ २९॥

वामेति। अत्र रुद्रान्ते कालो योज्यः। वामदेवमन्त्रस्य वामदेवः ज्येष्ठः रुद्रः कालः कलः विकरणः बलः विकरणः बलः प्रमथनः सर्वभूत-दमनः मनः उन्मन इति त्रयोदशमूर्तयः। तथा कारणे—"वामो ज्येष्ठश्च रुद्रश्च कालश्चैव कलस्तथा। विकरणो बलश्चैव विकरणो बलस्तथा। प्रम-थस्सर्वभूतश्च मनश्चोन्मन एव च" इति। तेषां 'वामदेवाय नमो ज्येष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलप्रमथनाय नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः'। इति मन्त्राः।

---

१. सर्वेभ्यस्सर्वतश्शर्वेभ्य इति किरणागमपाठः॥

त एव वामदेवकलामन्त्राः तान्नौमि इति तात्पर्यम् । अत्र वन्दे इति नमस्कारः । (तस्य द्वितीयाविभक्तियोगात्तस्यास्सत्यार्थहेतोरित्यभिप्रायः) ॥ २९ ॥

**सद्योजातं सर्वज्ञं प्रणतानां भवभयापहरम् ।**
**अतिभवयोजकममलं भवोद्भवं नौमि जगदधिपम् ॥ ३० ॥**

सद्य इति ॥ **भवभयापहरम्** । जन्मभयाच्चोत्तारकम् । **अतिभवयोजकम्** । अतिक्रान्तभवो अतिभवः तस्मिन् लयतत्वे योजकम् । **भवोद्भवम्** । भवो माया उद्भवः उत्तीर्णभव इति महामाया । अधिष्ठातृभावेन मायामहामायात्मकम् । स्वायम्भुववृत्तौ भवोद्भवपदस्यार्थ एवमेवेति सूचितः । **नौमि** प्रपद्यामि । नमश्च प्रणतानामिति[2] सूचितम् । भवभयापहरमिति[3] अभवे सूचितः । अतिभवेन नातिभवे सूचितः । योजकशब्देन भजस्वशब्दस्सूचितः । सद्योजातस्य सद्योजातः अजातभवे अभवे अनादिभवे भजस्व भवः उद्भवः इत्यष्टमूर्तयः । तथा कारणे— "सद्योजातश्च सद्यश्च भवश्चाभव एव च । अथानादिभवश्चैव भजस्वेति भवोद्भवः" इति । तेषां 'सद्योजातं प्रपद्यामि सद्योजाताय वै नमः । भवे भवेऽनादिभवे भजस्व मां भवोद्भवाय नमः' इति मन्त्राः । तानत्र नौमीति तात्पर्यम् । अत्र "प्रासादं यो न जानाति पञ्चमन्त्रमहातनुम् । अष्टत्रिंशत्कलोपेतं न स आचार्य उच्यते" । इति श्रुत्या अष्टत्रिंशत्कलान्यासमन्त्रस्य भूताम्भोराशिसिद्धिस्मरभुजगेत्यादिना कलासंख्या वर्णिता । पद्धत्यां विद्यादेहान्तर्भूत इत्युपेक्षितः । विद्यादेहानन्तरं कलामन्त्रस्तुत्या कलान्यासस्य करणे अभ्युदयः । अकरणे न दोषः । आवाहनादिवन्नावश्यत्रत इति भावः ॥ ३० ॥

---

१. कुण्डलरेखान्तर्गतेयं पङ्क्तिरादर्शान्तरे न दृश्यते । २. इत्यनेन इति भावः । ३. इत्यनेन इति भावः । ४. उत्तरत्र वक्ष्यमाणकारणागमप्रमाणदृष्ट्या सद्य इति वर्तितव्यमिति भाति ॥

अथ आवाहनप्रकारः—

श्रीमन्मूलमनूत्थनादशिखया ब्रह्मादिसादाशिव-
स्थानत्यागगतिक्रमोर्ध्वविलसद्व्योमान्तसंस्थाय ते ।
बोधानन्दमयाय सर्वविभवे नित्याय विश्वात्मने
शुद्धायामलतेजसे च महते तस्मै परस्मै नमः ॥ २१ ॥

श्रीमदिति ॥ **श्रीमन्मूलमनूत्थनादशिखया ।** मूलं मूलाधारः । तत्रस्थमनुः प्रासादः । तदुत्थितनादः अकाराद्याः । शिखा बिन्द्वादि-कलावृत्तिः ॥ **ब्रह्मादिसादाशिवस्थानत्यागगतिक्रमोर्ध्वविलसद्व्योमा-न्तसंस्थाय ।** ब्रह्मादिस्थानं हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्राः तेषां स्थानानां अकारादिमात्राक्रमत्यागेन यो गतिक्रमः तस्योर्ध्वं ब्रह्मरन्ध्रोर्ध्वविलसद्व्योम-शक्त्यादिकलाचतुष्टयस्थानमनाहतशिवाधिष्ठितम् । तदन्तमुन्मन्यन्तं अत्य-न्तसप्तमस्थानरूपद्वादशान्तः । तत्र संस्थिताय । त्यागक्रमश्चोक्तो मन्त्र-वार्तिके—"कमलजकेशवरुद्रमहेश्वरोऽन्यः पराशिवस्सकळः । एते कारण-संज्ञास्स्वस्वाध्वव्यापिनस्स्वमन्त्रस्थाः" ॥ अत्रान्य ईश्वरस्यान्य इति सदा-शिवः । सकळः परशिव इति अनाहतशिवः । स्वस्वाध्वनां निवृत्ति-प्रतिष्ठाविद्याशान्तिशान्त्यतीतकलाव्याप्ततत्वभुवनवर्णपदमन्त्रब्रह्मादीनाम् । शान्त्यतीतं त्रिविधम् । सकळं निष्कळं सकळाकळं चेति । क्षुब्धं सकळं देहस्थं सदाशिवाधिष्ठितम् । क्षोभमाणशिखारूपं सकळाकळं महाशिव-कारणम् । अक्षुब्धं निष्कळशिवाधिष्ठितम् । देहादिशिखातीतस्वमात्राः । हृदिस्थाकारकण्ठस्थोकारतालुस्थमकारभ्रूमध्यस्थबिन्दुमूर्धस्थनादशिखान्त-स्थशक्त्यादयस्स्वमात्राः । बिन्दौ बिन्दुकला । नादे नादकला । अन्त-र्हृदा इत्यादि । तथा प्रपञ्चसारे—

---

१. अमिततेजसे इत्यपि पाठः ॥

अथवादिबीजमौपुनरपि विशेषतोऽपि संहरेद्बिन्दौ ।
बिन्दुं नादे तमपि शक्तौ शक्तिं तथैव शान्त्याख्ये ॥

तेजस्यनन्यकेचिन्निर्द्वन्द्वे निष्कळे सदानन्दे ।
सूक्ष्मे च सर्वतोमुखकरपदनयनलक्षणे लक्ष्मे ॥

स्वात्मनि संहृत्यैवं कारणेन्द्रियवर्गनिर्गमोपेतः ।
तल्लीनपुण्यपापो निरुच्छ्वसनो ब्रह्मभूत एव स्यात् ॥

इत्यादिक्रमः । **बोधानन्दमयाय** । तत्कालबोधेन स्वपरप्रकाशात्मना सञ्जायते य आनन्दस्स्वसंवेद्यसुखातिशयः तन्मयाय । अनेन सुखदुःखपरित्यागो मोक्ष इति येषां मतं ते निरस्ताः । निरहङ्कारलयवादिनो मनोलयवादिनः पाषाणवादिनश्चार्वाकवैशेषिकपाञ्चरात्रमीमांसकाः प्रतिक्षिप्ताः । **सर्वविभवे** । सर्वकर्त्रे "सिद्ध एव हि कर्तृत्वमौदासीन्यं महेश्वरे" इति प्रवाहनित्येश्वरवादिनश्च अकर्तृत्ववादिनो वेदान्तिनश्च प्रतिक्षिप्ताः । **नित्याय** । अनेन क्षणिकवादिनो बौद्धा निरस्ताः । **विश्वात्मने** । अनेन व्यापित्ववादिनः[1] क्षपणा निरस्ताः । **शुद्धाय** । अनेन शुद्धावीरवासनानिष्ठाः[2] कौळा निरस्ताः । **अमलतेजसे** । अनेन सूर्यादिलोकमूर्तिवादिनो ज्योतिश्शास्त्रज्ञा निरस्ताः । **महते** । अनेन सङ्कोचविकासधर्मवादिनश्शाक्ता निरस्ताः । **परस्मै** । अनेन विश्वरूपवादिनश्शिवाद्वैतिनो निरस्ताः । तस्मै **नमः** ! प्रह्वोऽस्मि ॥ २१ ॥

प्रासादस्थाकारादिकलानां मात्रा वदति—

**चन्द्रयुग्मगुणार्धमात्रतदर्धतद्दळषोडश-**
**श्युत्तरात्रिदशाब्धिषष्टिभुजङ्गमश्रवणक्षमा ।**
**दर्शनेषु करांशभावमितोन्मनी परमासनं**
**यस्य तं प्रणतोऽस्मि निष्कळमव्ययं परमं शिवम् ॥२२॥**

---

१. व्यापित्व इति पाठभेदः । २. शुद्धाचार इति पाठभेदः ॥

चन्द्र इति ॥ चन्द्रः एकः । युग्म द्वयम् । गुणास्त्रयः । अर्धमात्रस्स्पष्टः । तदर्धः पादः । तद्दळम् पादार्धः । एवंपूर्वसंख्याक्रमेणाभिदधाति । षोडश पादार्धस्यार्धः । द्व्युत्तरत्रिदश । त्रिभिर्हतं दशकं त्रिदशकमिति त्रिंशत् । द्व्युत्तरमिति द्वात्रिंशत् । अब्धिषष्टि । अब्धयश्चतुस्समुद्राः । चतुष्षष्टिरित्यर्थः । भुजङ्गमश्रवणक्षमा । भुजङ्गमा अष्टनागाः । श्रवणे द्वयम् । दशस्थानत्वाद्विंशतिः क्षमा एकं तृतीयस्थानत्वाच्छतम् । अष्टाविंशत्यधिकशतमित्यर्थः । दर्शनेषुकरांश । दर्शनं समयानि षट् । इषुः कामबाणत्वात्पञ्च इति पञ्चाशत् । करौ द्वौ प्रकृतिद्वयमिति द्विशतम् । षट्पञ्चाशदधिकद्विशतांशमात्रा समनेत्यर्थः । मनस आसनमिदमित्थमिति सङ्कल्पविकल्पौ भेदेन भवतः । उन्मन्यामविशेषाकारसङ्कल्पविकल्पौ भवतः । तावन्न भावः इत्युक्तौ । भावमिता । भावमात्रा उन्मनी कला । तथोक्तं स्वच्छन्दे—

उन्मना तु परा सूक्ष्मा अभावं भावयेत्सदा ।
सर्वेन्द्रियमनोतीतमलक्षो भाव उच्यते ॥
भावेन भाव्यभावेन भावं कृत्वा निराश्रयम् ।
सर्वोपाधिविनिर्मुक्तमभावं लभते पदम् ॥ इति ॥

तत्रैव—

उन्मना सा तु विज्ञेया मनस्सङ्कल्प उच्यते ।
सङ्कल्पोत्क्रमतो ज्ञानं सोन्मनं युगपत्स्थितम् ॥
उन्मना चाथ न ग्राह्या आत्मबोधे स्थितं मनः ।
व्यापारं मानसं त्यक्त्वा बोधरूपेण योजयेत् ॥

एवंभूतोन्मनी यस्य परमासनं तं प्रणतोऽस्मि । अयमाशयः—क्षित्यादिकुटिलाप्रान्तमन्त्रसिंहासनस्थितमिति सर्वाध्वपीठमित्युक्तत्वात् विश्वं

---

१. मशेषाकार इत्यपि पाठभेदः ॥

पीठं विश्वातीतं महामाया लिङ्गम्। ततो विश्वात्मके स्वमादि 'तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः। ईशतत्पुरुषाघोरवामाजैर्मस्तकादिकम्' इति श्रीमृगेन्द्रश्रुत्या पञ्चकृत्यप्रवर्तिका शक्तिर्विद्यादेहः। तस्य मूर्धादि-नियमवासनाऽपि मृगेन्द्रे—ईष्टे येनेत्यादि। तस्य वामाद्याश्शक्तयश्च कृत्यभेदभिन्ना शक्तिः। इत्थं शक्तिः कुर्वती देहकृत्यं देहाभावादुच्यते देहशब्दैः। तस्या भेदा येऽपि वामादयस्स्युः तेऽपि प्रोक्ताः कृत्यभेदेन सद्भिः इति। वामादिनिरूपणं पराख्ये—

सव्यं वमत्युद्गिरति यया वर्गं त्रिधा स्थितम्।
साऽस्मिन् वामा समुद्दिष्टा वामदेवसमाश्रया॥

वामो वा यस्समारम्भो विपरीतस्स्वसम्मतम्[1]।
प्रवृत्तिं कुरुते पुंसां सा वामा वामकर्मगा॥

ज्येष्ठा मुख्यक्रियारम्भो यो नरोऽर्थपरस्सदा।
स पुंसो ज्येष्ठया शक्त्या या सा च ज्येष्ठसञ्ज्ञता॥

धर्माधर्मसमारम्भो ज्येष्ठाज्येष्ठकचोदितः।

ननु—

अन्यथा ज्येष्ठभावेभ्यः पुंसां ज्येष्ठगुणाश्रयः।
रुक्शब्दवाचको व्याधिर्नृणामज्ञानलक्षणः॥

या तं द्रावयितुं शक्ता सा शक्तीरुद्रवर्तिनी।
रौद्रेण कर्मणा पुंसां शास्त्रदृक्कर्ममोहिता॥

सा रौद्री रुद्रकर्मोत्था रुद्राश्रयनिषङ्गिणी।
कलयेत्स उपादानं सहकारी[2] तदन्यथा॥

सा कालप्रेरणे शक्ता कालस्येयं वशे स्थिता।
येयं कालपरिच्छेदे निश्चिता कृत्यगोचरे॥

---

१. स्वसम्मतं, स्वयम्मतम् इति पाठभेदौ। २. सहकारि च तद्यथा इति पाठभेदः।

कलयित्री स्थिता पुंसां कालचिह्नविलक्षिता ।
सर्वप्राणिकलाक्षेपे स्वकर्मपरिपिण्डिते ॥
कलानां विकिरा तेषां लक्षयेत्तेन संक्षयः ।
कला विविक्षिता यस्मिन् तत्क्षेपो यो नरः पुमान् ॥
अन्यकार्यसमारम्भे सा कलापेक्षया भवेत् ।
अणूनां यद्बलं न्यूनं विक्षिप्तं विततेऽध्वनि ॥
यया कर्माङ्गसम्बन्धे कलानां विकरा तु सा ।
बलं या ज्ञानविज्ञानमुत्तरोत्तरगं नृणाम् ॥
सापेक्षया बलक्षेपाद्बलक्षेपवशानुगा ।
पाशानां यद्बलं चान्यत्प्रमथ्नाति यया शिवः ॥
बलानां प्रमथा प्रोक्ता बलप्रमथनानुगा ।
क्षणान्निद्रापमर्देन निद्रा भोगादिभिर्यया ॥
प्रमथ्नाति बलं पुंसां सद्योऽन्यबलमन्थनात् ।
स्वसुखान्तरदुःखेन सर्वभूतानि सृष्टिषु ॥
दमन्या दमयत्यस्मात्सा शक्तिर्दमनात्मिका ।
नरस्स्वदेहभूतानि कृच्छ्रचान्द्रायणादिभिः ॥
दमयन् विविधैः क्लेशैर्यया सा दमनी तथा ।
अमनस्कं निरालम्बं तत्वं नयति या पशुम् ॥
मनोन्मनस्य देवस्य सोक्ता शक्तिर्मनोन्मनी । इति ।
अरुणाभं स्मरेन्नेत्रं दृक्क्रियेच्छात्मकं विभोः ॥
त्रितत्वरूपं वह्न्यादि मण्डलत्रितयाश्रितम् ।

---

१. तेन लक्षयेत्तनुसंक्षयः इति पाठभेदः । २. विशिक्षिता इत्यपि पाठः । ३. कलाक्षेपया इत्यपि पाठः । ४. लयानुगा इत्यपि पाठः । ५. युता इत्यपि पाठः । ६. प्रमथादि इत्यपि पाठः । ७. श्रयम् इत्यपि पाठः ॥

इत्युक्तत्वात् इच्छाज्ञानक्रियाशक्तयः सूर्यसोमाग्निमण्डलानि । तदधिपाः ईश्वरसदाशिवशिवाख्या अधिकारभोगलयस्थशिवभेदा एव । तदुक्तं शिवतन्त्ररहस्यसारे—"ईश्वरोह्यात्मतत्वं तु विद्यातत्वं सदाशिवम् । शिवतत्वं परं शुद्धं अप्रमेयमनौपमम्" इति । 'मायाधश्च्छदनं रक्तं विद्योर्ध्वच्छदनं सितम्' इति । 'माया चाथ महामाया विद्याविश्वात्मिका क्रिया' । विद्या विश्वातीता ज्ञानशक्तिः । तेत्वध ऊर्ध्वच्छदने मायाशुद्धविद्ये । अनन्तः पूर्वकोटिपर्यायः । कोटिः पूर्वपर्यायः । यस्य न कदाचिदपि पशूनामिव व्यञ्जकाख्यदृक्क्रियाशक्त्युदयो नास्ति सोऽनन्तः । तदुक्तं व्योमव्यापिस्तोत्रे—'अनन्तः पूर्वकोटिः प्राथम्यादत्र जन्मकथितो यः । यस्य कदाचिन्नासौ शिवस्य तस्मै नमोस्त्वनन्ताय' इति । 'तच्चास्याऽऽवृतिशून्यत्वान्न व्यञ्जकमपेक्षत' इति मृगेन्द्रे । तच्छक्तेस्सामर्थ्यविशेषा धर्मादयः पुंसां शिवधर्मशिवज्ञानविषयवैराग्यदृक्क्रियैश्वर्ययुक्ताः । शक्तयोऽधर्मादयः पुंसां धर्मज्ञानोपरोधनज्ञानक्रियाशक्तिस्त्वा अधर्माः । एवं ज्ञानाद्या नेतव्याः । आधाराख्या क्रियाशक्तिः "ब्रह्माण्डस्य तले शक्तिर्जगदाधाररूपिणी । शैवी सा च क्रियाशक्तिर्विश्वविक्षोभकारिणी" इति । शुद्धविद्या ज्ञानशक्तिस्तदेव पीठम् । शुद्धविद्यामयं पद्मम् इति । बोधरूपा पराशक्तिः इत्यादि । शक्त्याद्यायुधानि सर्वज्ञताद्याश्शक्तयः । एवं षडङ्गम् । "सर्वज्ञतादिशक्तीनां सतीनामात्मनि प्रभोः । उन्मज्जनं भावयामि षडङ्गविधियोगतः" । इति । विज्ञानेन्दुकप्राञ्चितमिति ज्ञानशक्तिरिन्दुः । एवंविधशक्तिमान् यश्शिवो मूलमन्त्रवाच्यः । एवंविधशक्तिध्याननिष्ठानां उन्मन्यासन भवतीति तात्पर्यम् । निष्कळं परमं शिवं प्रणतोऽस्मि इति सम्बन्धः ॥ ३२ ॥

---

१. पूर्वपद्मपर्यायः पूर्वजन्मपर्यायः इति पाठभेदौ । २. पुंसामस्मात् इति मातृकापाठः । ३. अज्ञानाद्या इति पाठभेदः ॥

आदिपञ्चममृत्युभूषणचन्द्रखण्डगुणाश्रदृ-
ग्भानुगध्वनिसीरभास्करसेन्दुवृत्तहलाकृतिः ।
सांशुमत्रिशिखद्विबिम्बगतद्विकुब्जग उन्मना
पातु वस्सकळापरस्सकळाकळस्सकळशिवः ॥ ३३ ॥

आदीति । **आदिः** अकारः । **पञ्चम** उकारः । **मृत्युः** कालबीजत्वान्मकारः । **भूषणम्** । बिन्दुः वृत्तार्धद्विबिम्ब इति । **चन्द्रखण्डः** वृत्तार्धः । **गुणाश्रं** त्र्यश्रम् । निरोधी **दृग्भानुगध्वनिः** । दृगत्र नेत्रजश्चन्द्रः । तेन वामपार्श्वबिन्दुः । भानुः दक्षिणपार्श्वबिन्दुः तन्मध्यगो ध्वनिर्नादः । स[1] दण्डाभ इति केचित् । सीराभ इत्यन्ये । नादं[2] द्विकुब्जगमिति वचनाच्च "शून्यभग्नशिरो देवो भुजङ्गकुटिलाकृतिः" इति वचनाद्भुजङ्गकुटिलाभद्विकुब्जगमेव । **सीरभास्कर** । सीरो हलः भास्करो दक्षिणपार्श्वबिन्दुः । अत्र भास्करसन्निधेस्सीरस्यापि दक्षिणवामक्रमश्च सूचितः । **सेन्दुवृत्तहलाकृतिः** । इन्दुवृत्तं वामपार्श्वबिन्दुः । हलाकृतिस्सीराकृतिः । इन्दुसन्निधानहलोऽपि वामक्रमः इति शक्तिः । **सांशुमत्रिशिख** । अंशुमान् आदित्यः त्रिशिखः शिखे(दे)ति दण्डाकारः । त्रिशिखः त्रिदण्डः । सा व्यापिनी (व्यापिनी) बिन्दुविलः त्रिकोणाकारतां गतेति बिन्दुदण्डाकाररेखेति केचित् । रुं[3]जासनयनामित्युक्तत्वात्त्रिशूलाभ इति केचित् । उभयश्रुत्योरविरोधेन द्रष्टव्यरूप इति गुरवः । इति सा व्यापिनी । **द्विबिम्बगतद्विकुब्जगः** । द्विबिम्बं बिन्दुद्वयं द्विकुब्जं च वक्रद्वयम् । बिन्दुद्वयान्तराळस्थाद्विरेखामपि पुनस्समना इति वचनात् बिन्दुवक्रयोर्मध्ये दण्डाकाररेखे विधेते सा समना । **उन्मना** । उन्मनीकला । सा तामसगर्[4]जितचूळिकेति केचित् । कुटिलं तु त्रिधामतमिति वचनात् कुटिलमेवेति

१. तद्दण्डाभ इति पाठभेदः । २. नाग राग इत्यपि पाठौ । ३. श्रुज इत्यपि पाठः । ४. गर्भित इत्यपि पाठः ।

केचित् । विबिन्दुविलसदृजुरेखा तयोर्न्मना[1] इति बिन्दुर्दण्ड[2]ाकाररेखेति केचित् । स्वर्णं[3] यद्वत्पिपीलिकेति वचनात् स्वर्णाकृतिरिति केचित् । पक्षचतुष्टयानामविरोधेन या रेखा दृश्यते सैव उन्मनीति गुरवः । तदुक्तं—'प्रतितन्त्रं विरोधेन योऽर्थः सङ्गृह्यतेऽत्र तु । तद्गुरोर्युक्तिदौर्बल्याद्विज्ञेयं वाग्विडम्बनम्' इति । एवंभूतकलायुक्तशिवो हकारः । एष सकळः निष्कळस्सकळाकळ इति त्रिधा । सकळः अकारयुक्तहकारः । शून्यो भग्नशिरो देवो भुजङ्गकुटिलाकृतिरिति वचनात् । अकारवर्जितहकारो हल्मात्रो निष्कळः । "हकारं परतो नाभेर्वितस्तिं प्राप्य संस्थितम्" इति वचनान्नाभेर्हृदयान्तास्थितो हकारस्सकळाकळः । सकळे प्रणवयोगाद्घोषादिप्रणवाख्यमीशानबीजमेव भवति । तदुक्तं स्वच्छन्दे—अकारश्चाप्युकारश्चेत्यादि । तत्रैव—'हकारस्तु स्मृतः प्राणस्स्वप्रवृत्तौ हलाकृतिः । अकारेण पदा युक्ता उकारोच्चारणेन तु' । उकारव्याप्तेन इत्यर्थः । 'मकारमात्रया युक्तो मन्त्रोच्चारो भवेत्स्फुटः' इति । अस्य मन्त्रस्यैवैकाद्वित्रिमात्रार्धमात्रादयः । तथा स्वच्छन्दे— अकारश्च हकारश्चेत्यादि । 'एकमात्रस्सविज्ञेयो हृदयात्सम्प्रवर्तते । उकारस्तु द्विमात्रो वै कण्ठस्थाने समुच्चरेत् । त्रिमात्रस्तु मकारो वै तालुमध्ये तदुच्चरेत्' । बिन्दुश्चैवार्धमात्रस्तु इत्यादि । सकळाकळः हकारः प्रणवसञ्जातमेघारूपयुतः । तदुक्तं सोमशम्भुपादैः—'हकारे तटिदाकारे षडध्वप्राणरूपिणि' । एष हल्मात्राकारो नाभ्यन्तो वर्तेः । 'हकारं परतो नाभेर्वितस्तिं व्याप्य संस्थितम् । ततःपरमकारस्तु हृदयाच्चतुरङ्गुलम्' । अस्य मात्राक्रम एकद्वित्र्यर्धादिक्रमेणैव । तथा तेन—'तत्र तस्याकारसहितस्य हृद्गतस्य प्राणभूतस्य हृदय उच्चार' इत्यादि । तस्य सकळस्य निष्कळप्रासाद इति संज्ञात्वम् । ब्रह्मकलारहितत्वात् । सकळाद्यष्टविधप्रासादपक्षे निष्कळप्रासाद[4]स्वरूपस्यैवंविधत्वात् अङ्गप्रणवादि-

---

१. तयोर्मना इत्यपि पाठः । २. बिन्दुर्दण्ड इति पाठभेदः । ३. सार्णां इति पाठभेदः । ४. प्रासादस्य स्वरूप एवंविधत्वादिति मातृकापाठः ॥

प्रासादानामुपरि सद्यादिवाचककारोकारमकारबिन्दुनादानां योगेन मेधार्घीशविषकला भवन्ति । तद्युक्तस्सकळः । अङ्गरूपप्रणवश्च विद्यते । सद्यश्च पृथिवी ज्ञेयेत्यादि कालोत्तरे । सद्यः क्षितिर्जलं वामोऽघोरस्तेजो मरुद्वियत् । ईशः खमिति पराख्ये । निवृत्तिः पृथिवी ज्ञेयेत्यादि कालोत्तरे । ईशानं शान्त्यतीताकमित्यादि । 'निवृत्तिं हृदयेनैव प्रतिष्ठां शिरसा हुनेत् । विद्यां च शिखया हुत्वा शान्तिं च कवचेन तु । शान्त्यतीतं परं व्योम प्रासादेन तु होमयेत्' । कालोत्तरे—'हृद्बीजं पार्थिवे युक्तं पृथिवीं धारयेत्क्रमात्' इत्यादि । तस्मादङ्गिनां सद्यादिब्रह्मणां अन्तरङ्गरूपहृदयादि वाचकद्वितीयचतुर्थषष्ठदशद्वादशमात्राणां[1] स्थितेर्विद्यमानतयाऽङ्गरूपप्रणवश्चास्ति । ब्रह्माणि ह्रस्वाः प्रोक्तानि इत्युक्तत्वात् ब्रह्मप्रणवो ह्रस्वः । दीर्घाण्यङ्गानि षण्मुखेत्यङ्गप्रणवो दीर्घः । ह्रस्वो दहति पापानीत्यादिकालोत्तरश्रुत्या प्लुतप्रणवो मूलः । अस्तु सन्ध्यक्षराणां ह्रस्वा न सन्तीति कथं ह्रस्वत्वम् । छन्दोवत्सूत्राणि सिद्धान्तं वेदसारं हि इति कामिके तत्रैव । शैवं वैदिकमेवोक्तं वैदिकं शैवमेव चेति । तस्माच्छ्रुत्युक्ते[2]वद्ध्रस्वत्वं मानम् । न लोकोक्तिवत् । तदर्थमथर्वणशिखायां स्थूलमेतद्ध्रस्वदीर्घप्लुतं इति । ओं ओं ओं इत्युक्त्वा[3] इति । अथ अङ्गप्रणवोद्धारः । हृद्बीजस्य द्विधाकृतस्य प्रथमाकाराशिरोयोगादेकारः । प्रयोगश्चास्य तव इदं तवेदम् । तस्य द्विधाकाराशिरोयोगादैकारः । प्रयोगश्च तव एषा तवैषा । अनेनैकारेण शिखाबीजस्य द्विधाकृतस्य प्रथमकर्णस्य योगादाकारत्वम् । तस्यै उन्नत्यै तस्या उन्नत्यै । कवचस्य द्वितीयकर्णयोगादाकारत्वम् । प्रयोगः पूर्ववत् तदा आ उ भवति । उभयोर्द्वितीयस्वरयोः सावर्ण्येन चैकद्वितीयस्वरत्वम् । प्रयोगः खट्वाग्रम् । उभयोः पञ्चमस्वरयोस्सावर्ण्येन षष्ठस्वरत्वम् । प्रयोगः मधु उत्तमं मधूत्तमम् । तदा आ ऊ इति द्वितीयषष्ठस्वरौ भवतः । तयो-

---

१. मन्त्राणां स्थितिर्विद्यमानतया इति पाठभेदः । २. श्रुत्युक्तत्वात् इति पाठभेदः । ३. उक्तत्वात् इति पाठभेदः ।

7

र्मध्ये स्त्रीरूपविसर्जनीयस्स्थितः । प्रयोगश्च वृक्षाः ऊधरस्थाः वृक्षा ऊधरस्था इति । तस्य विसर्जनीयालोपेन सन्धिकार्ये प्राप्ते द्वितीयषष्ठयोस्त्रयो· दशस्वरत्वम् । प्रयोगश्च रम्भा ऊरुः रम्भोरुः इति । तस्योपरि नेत्ररूपानुस्वारयोगः । मोऽनुस्वार इत्यनुस्वारो मकारस्याऽऽदेशत्वा- द्धातुरूपमकारस्यापि ग्रहणेन वोमिति दीर्घसंज्ञाङ्गप्रणवो भवति । ब्रह्मसु पुरुषेशानबीजस्थस्वरेण सद्येन च प्रथमस्वरत्वम् । पुरुषस्थैकारेण वाम- देवेनापि तृतीयस्वरत्वं विद्यते । ईशानस्थपञ्चमेन च अघोरेण च पञ्चम- स्वरत्वम् । तृतीयस्वरयोस्सावर्ण्येन चतुर्थस्वरत्वम् । चतुर्थस्य पञ्चमाकार- योगादेकादशस्वरत्वं (द्वादश) । तस्य द्वितीयवाग्भवयोगात् द्वादशस्वरत्वम् । पञ्चमस्वरयोस्सावर्ण्ये षष्ठस्वरत्वम् । द्वादशस्वरस्य षष्ठयोगात् आकारत्वम् । द्वितीयस्वरयोस्सावर्ण्येन द्वितीयस्वरत्वम् । तस्मात्सद्यवामदेवतत्पुरुषाणां द्वितीयस्वरेऽन्तर्भावः । अघोरेशानयोष्षष्ठेऽन्तर्भावः । एवंभूतद्वितीयषष्ठ- योगात्त्रयोदशस्वरत्वम् । अस्य ह्रस्वप्रणवत्वात् बिन्दुर्न ह्रस्वदीर्घप्लुतप्रण- वेषु । अकारत्रयमुकारत्रयं च । अत्र प्रथमाकारो हकारो योज्यः । द्वितीय- तृतीयोकारस्य सावर्ण्येन द्वितीयत्वम् । तस्य च हकारयोगान्मेधात्वम् । द्वितीयतृतीयपञ्चमयोस्सावर्ण्येन षष्ठत्वम् । दीर्घप्रणवबिन्दुजातमकारस्य प्लुतप्रणवमकारेऽन्तर्भावः । सकळनिष्कळसकळाकळानां बिन्द्वाद्यास्साधा- रणाः । एवंविधस्सकळप्रासादः । तथा सार्धत्रिशत्यां—"षष्ठं त्रयोदशान्तं च पञ्चमे विनियोजयेत् । शिवान्तं तु विजानीयान्मन्त्रमूर्तिं सदाशिवम् । ह्रस्वो दहति पापानि" इत्यादि । त्रिमात्रश्च द्विमात्रश्च द्विमात्रश्चेत्यादि । सद्यश्चाष्टकलायुक्त इत्यादि । "प्रासादं यो न जानाति पञ्चमन्त्रमहातनुम् । अष्टत्रिंशत्कलोपेतं न स आचार्य उच्यते । ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च

---

१. अस्त्ररूप इति पाठभेदः । २. यलोपेन इत्यपि पाठभेदः । ३. स्वर- द्वयमिति पाठभेदः । ४. पुरुषस्थेका इत्यपि पाठः । ५. स्वरद्वयमित्यपि पाठः । ६. स्वरद्वयमित्यपि पाठः ॥ ७. द्वितीयत्वमित्येतस्यानन्तरं "तस्य त्रयोदशस्वरत्वम्" इत्यधिकतया कश्चन पाठः ।

सदाशिवः । पञ्चधा पञ्चदैवत्यस्सकळः परिपठ्यते" । इति । बृहत्कालोत्तरे– "ईशानं रुद्रसंज्ञं तु प्रोद्धरेच्चांशुसंज्ञकम् । औषधाक्रान्तशिरसमूहकस्योपरि स्थितम् । अर्धचन्द्रोऽथ नादश्च बिन्दुद्वितयमध्यगः । तदन्ते विश्वरूपं तु कुटिलं तु त्रिधा मतम् " । इति । आचार्यैरपि घोषो मेधा क्षमाख्येत्यादि । निष्कळप्रासादमन्त्रस्याङ्गप्रणवपञ्चमस्योपरि तत्प्रणवाकारयोगाद्वादेशः । प्रयोगश्च मधु अत्र मध्वत्र । वकारलोपादकारस्तस्याङ्गतया प्रथमस्वरयोस्सवर्णदीर्घत्वम् । तस्य प्रकृतिलये ह्रस्वत्वम् । शुद्धाख्ये—"प्रकृतिर्ह्रस्ववर्णास्स्युर्विकृतिर्दीर्घ उच्यते" इति । एवंभूताङ्गप्रणवरूपः प्रथमस्वरस्य संयोगाच्छून्यसंज्ञो भवति । प्रणवयोगान्मेधा मेधोपरि निषादः । अत्र ब्रह्मप्रणवराहित्यात् षष्ठस्वरस्य नावकाशः । ब्रह्मराहित्यान्निष्कलः । एवं त्रिविधशिवो हकारः । युष्मान् पातु भोगमोक्षप्रदो भवतु । अभिमतफलदातृत्वमेव पालनम् । यद्वा कलाक्रमेण सकळादयः । तदुक्तं प्रासादोपनिषदि— षोडशकलो वै पुरुषः । तत्र व्यक्तं चतुष्कला । व्यक्ताव्यक्तमष्टकला । अव्यक्तं चतुष्कला चेति । व्यक्तं बिन्द्वन्तम् । व्यक्ताव्यक्तं नादाद्युन्मन्यन्तम् । अव्यक्तं व्योमाद्यनाश्रितान्तमित्यर्थः । तस्मात् षोडशकलाप्रासादोऽपि निष्कळपदेन सूचितः । यद्वा कारणपञ्चकानाहतशिवपरशिवरूपाः । सकळादयोऽधिष्ठातृक्रमात् । तदुक्तं प्रासादोपनिषदि— व्यक्तं ब्रह्मविष्णुरुद्रमहेश्वरसदाशिवरूपम् । व्यक्ताव्यक्तं शिवलिङ्गरूपम् । अव्यक्तं परात्परं शिवश्चेति । तथाऽऽगमः—'देहस्थस्सकलो ज्ञेयो निष्कळो देहवर्जितः' । सकळनिष्कळस्वभावेनानाहतशिवेनाधिष्ठिताः करन्ध्रादूर्ध्वं एकत्रिचतुश्चतुरङ्गुलाश्शक्तिव्यापिनीसमनोन्मनाभिधानाश्चतस्रः कला इति । यद्वा—अकारः आदिः यस्य वर्णस्येत्यादिद्वितीयस्वरः ।

---

१. शिरस ऊहकस्योपरि स्थितः इति पाठभेदः । २. करन्ध्राम्मुष्टिं तत्र या (वा) न्तावधिक्रमेकद्वित्रिचतुरङ्गुला इत्यशुद्धतया मातृकापाठः वर्तते ।

तस्य दीर्घस्वरस्याऽऽदेः पञ्चमो दीर्घः। पञ्चमषष्ठचतुष्टयरहितस्वरद्वादशकेषु दीर्घपञ्चमौकार इत्यर्थः। 'मात्राद्वादशकास्सौराः प्रोक्ताष्षण्डविवर्जिता' इत्युक्तत्वान्मृत्युरुकारः। भूषणं मकारः। चन्द्रो बिन्दुः। खण्डचन्द्रानन्तरत्वात् चन्द्रखण्डः। गुणाश्चादयः पूर्ववत्। तदुक्तं प्रासादोपनिषदि—"पञ्चदीर्घं मृत्युरेव भूषणं बिन्दुरेवं च। खण्डचन्द्रो निरोधी च नादो नादान्त एव च। शक्तिश्च व्यापिनी सूक्ष्मा समना चैव चोन्मना। समना व्यापिकान्तस्स्थे व्योमाङ्गानन्दसूक्ष्मके। अनाथाऽनाश्रिता देवी कलेरूपं शिवात्मकम्"। इति। इत्थं षोडशकलात्मको मूलमन्त्र उद्धृतः॥ ३३॥

निष्कळं शिवरुद्रपुद्गलभूषणार्धहिमांशुम-
द्रोधिदण्डतदन्तशक्तिचतुष्टयेश्वरयोगिनम्।
शङ्करं वसुसागराङ्गुलचारिणं रसशून्यगं
सर्वमन्त्रपतिं प्रासादमहं नतोऽस्मि षडध्वगम्॥ ३४॥

निष्कळमिति॥ आद्यपूर्वश्लोकविवृतिमन्त्रप्रस्तारस्य कलानां स्वगुरुक्रमायातमन्त्रस्य चाख्यां तत्प्रस्तारोच्चारयोः लक्षणं च व्याप्तिं चाभिदधाति। शिवः अकारः। सङ्ख्याक्रमेण प्रथमत्वात्। रुद्रः उकारः। उः परमेश्वरो यतः। पुद्गळः। आत्माऽतो मकारः। तदुक्तं पञ्चाक्षरवृत्तौ—मकारस्सोऽहमिति ब्रवीति। नहि निषेधार्थो नकारो भवेत्। मो जीवोऽखिलकार्ययोनिविषयस्सर्ग इति। पञ्चाक्षरस्तवे—मध्ये शिवस्तदनु शक्तिरथो तदात्मा तद्बन्धनं प्रथममस्य निवारकं चेति। भूषणं बिन्दुः। अर्धहिमांशुमत् अर्धचन्द्रः। रोधि निरोधी। दण्डः नादः। तदन्तो

---

१. स्वरस्याऽऽदेशपञ्चमो इति पाठभेदः। २. बिन्दुरूपकं इति पाठभेदः। ३. नन्तसंज्ञकं इत्यपि पाठः। ४. ज्ञेयोह्यष्टकलश्शिवः इत्यपि पाठः। ५. उद्धृत्यः इत्यपि पाठः। ६. आद्यपूर्वश्लोकवृत्तितन्मन्त्रप्रस्तारस्य इत्यपि पूर्वश्लोकप्रतिपादितमन्त्रप्रस्तारस्य इत्यपि पाठः। ७. सङ्ग इत्यपि पाठः।

नादान्तः । **शक्तिचतुष्टयम्** शक्तिव्यापिनीसमनोन्मनान्ताः । ताभिः कलाभिश्च । एतासां **ईश्वराः** । ब्रह्मविष्णुरुद्रेश्वरसदाशिवनाहतशिवशिवाः । तैरीश्वरैश्च **योगिनम्** । युक्तम् । **वसुसागराङ्गुलचारिणम्** । वसवोऽष्टौ । सागराश्चत्वारः । तयोर्योगः द्वादश । अङ्गुलानि पञ्च । द्वादशपञ्चकमिति षष्ट्यङ्गुलानि । तन्मात्रचारिणम् । वस्त्यादिब्रह्मरन्ध्रान्तं तालचतुष्टयम् । तदूर्ध्वं[१] तालम् । एवं वस्त्यादिबाह्यद्वादशान्तपर्यन्तपञ्चतालप्रमाणचारिणमित्यर्थः । तदुक्तं—वस्तिश्चतुष्कलापत्रकमलस्तेजसां निधिः इत्यादि[२] । चतुरङ्गुलकोन्मनेत्यन्तं[३] तेजोनिधानमिति षष्ठश्लोकविवरणे लिखितः तत्र अवधेयः । **रसशून्यगम्** । रसाण्षडिति षट्शून्यगम् । तदुक्तं —"मेधादिकार्काख्यकलासु मध्यात्त्रिकत्रिकाणां विरहात्त्रिशून्यम् । एकैकहानेरुपरि त्रिशून्यं शून्यात्परं योजनधाम शैवम्" ॥ इति ॥ मेधादिकार्काख्यकलाः मेधादिद्वादशकलाः । तासु मध्यात् त्रिकत्रिकाणां विरहाच्छून्यम् । मेधार्धीशविषान्तमेकम् । बिन्द्वर्धचन्द्रनिरोध्यन्तं द्वितीयम् । नादनादान्तशक्त्यन्तं तृतीयम् । एकैकहानेरुपरि त्रिशून्यम् । व्यापिन्यन्ते चतुर्थं शून्यम् । समनान्ते पञ्चमं शून्यम् । उन्मन्यन्ते षष्ठं शून्यमिति शैव योजनधाम शिष्ययोजनधाम । शिष्ययोजनस्थानम् । षट्शून्यात्परमिति सार्धत्रिशत्यादौ । "हंस हंसेति यो ब्रूयात् हंसो देवस्सदाशिवः । गुरुवक्त्रात्तु लभ्येत प्रत्यक्षं सर्वतो मुखम्" ॥ ज्ञानरत्नावळ्यां—पर्वतं गुरुवक्त्र तु तस्याग्रमवलम्बयेदिति । प्रशान्तविषुवद्गुरुवक्त्रं प्रक्षेपभूः विसर्गाख्यं विसर्गातीतञ्चेति समानसे[४] पदे[५] प्रमेयचतुष्टयमागमेषु विद्यते[६] । व्यापिन्यन्तं प्रशम्भुः । प्रशान्तविषुवत्पते तत्र ऊर्ध्वाधःप्रवेशकं[७] गुरुवक्त्रं अशेषस्य

१. तालूर्ध्वं इत्यपि पाठः । २. वस्तिश्चतुष्कलेत्येतच्छ्लोकः योसाविति विंशतितमश्लोकविवरणे विद्यते । ३. नाभेरूर्ध्वमित्यादिचतुरङ्गुलकोन्मनेत्यन्तं तेजोनिधानमिति षष्ठश्लोकविवरणे लिखितः । ४. पते इति मातृकापाठः । ५. प्रदृश्यते इत्यपि पाठः । ६. पदे इति वर्तितव्यमिति भाति । ७. ऊर्ध्वं धामप्रवेशकमिति पाठभेदः ।

प्रमेयजातस्य परधामप्रक्षेपकं[1] विसर्गाख्यं प्रक्षेपभूः विसर्गातीतमिति[2] आरोहक्रमः। तदा परधामरूपात् विसर्गाख्यं स्पन्दपदमुन्मनाख्यं ततोऽनन्तराऽऽनन्दप्रसरमयतया तथा क्रमाच्छुद्धतत्वसृष्ट्युन्मुखं गुरुवक्त्रं समनाख्यम्। ततः प्रशान्तविषुवं व्यापिन्याख्यमित्याचार्यैः। अत्र गुरुवक्त्रार्थं[3] हंस हंसेति यो रूपो दृश्यते तद्वर्णान्तरूपो[4] यस[5]......या....तदेव शून्यषट्कम्। बिन्द्वादिशक्त्यन्तैः प्रथमहंसः। आदिमध्यान्तशून्यरूपः। तथा स्वच्छन्दे—"ऊर्ध्वशून्यमधश्शून्यं मध्यशून्यं तृतीयकम्। शून्यत्रयं च लभ्येत तदधो मध्य ऊर्ध्वतः" इति। द्वितीयहंसरूपः व्यापिनी समनोन्मनीशून्यरूपम्। तथा स्वच्छन्दे—"तदूर्ध्वं व्यापिनी शून्यं समनायां तु पञ्चमम्। उन्मनायां तथा षष्ठं षडेते समना[6] स्मृता"। इति। तदुक्तमभियुक्तैरपि—"उन्मनासमनाव्यापिन्याननस्तनयोनये। अझलन्तपदस्थाय तस्मै तद्वपुषे नमः॥" इति। अत्र अचामन्तौ बिन्दुविसर्गौ। हंसौ हलामन्तौ। तयोर्योगसञ्जातपदरूपाय इति। ज्ञानरत्नावळ्याम्—"औषधं विश्वरूपं तु रुद्राख्यं सूर्यमण्डलम्। चन्द्रार्धौ नादसंयोगो विसंज्ञं कुटिलं ततः। "तदन्ते विश्वरूपं तु कुटिलं तु त्रिधा[7] मतम्। निष्कळं परमं मन्त्रं शिवं साक्षात्सदाशिवम्"॥ इति। **सर्वमन्त्रपतिम्**। सर्वेषामाणवशाम्भवशक्तिरूपाणां मन्त्राणां पतिम्। 'एकविंशतिराख्याता मन्त्राणामीश्वरा वराः। आणवाश्शाम्भवाश्शाक्ता तथाऽन्या मन्त्रकोटयः'। इति। 'शतकोटिसहस्राणां मन्त्राणाममितौजसाम्। इष्टेन तु प्रसादेन सर्वे इष्टा न संशयः'॥ इति। **षडध्वगम्**। तदुक्तं सोमशम्भुभिः—'शनैरुदीरयेन्मूलं षडध्वप्राणरूपिणि'। इति। तट्टीकायां—षण्णामध्वनां प्राणवायोश्च स्वरूपिणि महानादे इति।

---

१. प्रथमं प्रक्षेपक्रमविसर्गाख्यं इति पाठभेदः। २. विसर्गातीताख्यमिति पाठभेदः ३. वक्रार्धे इति मातृका पाठः। ४. तद्वर्णान्तररूपो इति पाठभेदः। ५. यकसमानं इति पाठभेदः सर्वासु मातृकास्वप्येवमेव विद्यते। ६. समया इति पाठभेदः। ७. तथा इति पाठभेदः।

आनाभि वस्तेश्शून्यं स्याद्भृदन्तर्वाचकं गतः ।
ऊर्ध्वं वेदाङ्गुले तस्मात्तारो वा प्रथमस्वरः ॥

निवृत्तिः प्रकृतिर्ब्रह्मा सद्यो हृद्भौतिकाः पुरः ।
क्षोऽर्णो हरपदं न्येकमात्रा गोत्राङ्गुलोभिभिः ॥

वित्प्रतिष्ठा हरिर्वामशीर्षेर्धांशोऽथवा श्रुतिः ।
गोत्रार्णोऽष्टाङ्गुलोऽर्केन्दुकरवज्ज्ञेयपुद्गलम् ॥

द्विमात्रोऽथ विषं विद्या माया रुद्रोऽष्टपूस्तटित् ।
सप्तार्णो नरवत्तालुश्चतुर्वा....त्रिमात्रकः ॥

शिखाघोरौ बिन्दुरर्धं हृद्दीपश्शान्तिरीश्वरः ।
सायं पूकायवत् न्यर्ण बर्ममध्येऽङ्गुलेश्वरः ॥

शान्त्यतीतास्वराश्शम्भुस्तोयपूस्त्रिमनुर्ध्रुवः ।
त्रिलं सदेशोधेन्वादिनादान्तैकादशाङ्गुलम् ॥

चन्द्रो ज्योत्स्नामणिर्विद्युत्पादंन्यूनार्धमात्रकम् ।
कालाभार्वाऽङ्गुला रन्ध्राश्शक्त्याद्याः कोटिसूर्यभाः ॥

पूर्वतोऽत्रे न्यूनमात्रा एवं द्वादश षोडश ॥ इति कलाक्रमष्षडध्वव्याप्तिः । अन्यथा स्वच्छन्दे —

आपादमूर्धपर्यन्तं चित्ते संवेदनं हि यत् ।
भुवनाध्वा स विज्ञेयस्तत्वाध्वा च तथैव हि ॥

---

१. हृदन्तस्साचकं इति मातृकापाठः । २. यत्र इति मातृकापाठः । ३. अग्निभूः इत्यपि पाठः । ४. बिन्दुरसं इत्यपि पाठः ॥ ५. पूर्वकाय इति पाठभेदः । ६. मध्याङ्गुलेश्वरा इत्यपि पाठः । ७. पादानामर्धमात्रका इत्यपि पाठः । ८. भाया भाधो इत्यपि द्वौ पाठौ । ९. ऽध्व इति पाठभेदः । १०. एव इति पाठभेद ।

कलाकलितसञ्चारं प्राणस्सञ्चरते तदा ।
निवृत्तिश्च प्रतिष्ठा चाप्यधोभागे प्रवर्तते ॥

विद्याशान्तिस्तथाप्यूर्ध्वे शान्त्यतीतात्वधिष्ठिता ।
तदतीतः परो भावः तदूर्ध्वे पदमव्ययम् ॥

एवं बिन्दुकला ज्ञेया नादशक्त्यात्मिकाश्च याः ।
व्यापिन्याद्यात्मिकायाश्च व्याप्यव्यापकभेदतः ॥

प्राणैकसंस्थितास्सर्वाष्षट्त्यागात्सप्तमे लयः ।
वर्णाश्शब्दात्मकास्सर्वे जगत्यस्मिंश्चराचरे ॥

स्थिताः पञ्चाशता भेदैः शास्त्रेष्वानन्त्यकोटिषु ।
शब्दः प्राणस्समाख्यातः तस्माद्वर्णास्तु प्राणतः ॥

उत्पद्यन्ते लयं यान्ति यत्र शब्दो लयं गतः ।
एकाशीतिपदान्येव विद्याराजे स्थितान्यपि ॥

वर्णात्मकानि तान्यत्र वर्णाः प्राणात्मकाः पुनः ।
तस्मादेवं पदान्यत्र तानि प्राणे क्रमेण तु ॥
मन्त्रैकादशिका या च सा च हंसे व्यवथिता ।
पदैकाशीतिका सा च प्राणैश्चरति नित्यशः ॥

अकारश्चाप्युकारश्च मकारो बिन्दुरेव च ।
अर्धचन्द्रो निरोधी च नादो नादान्त एव च ॥

शक्तिश्च व्यापिनी चैव समनैकादशी स्मृता ।
उन्मना तु ततोऽतीता तदतीतमनामयम् ॥

मन्त्रा एवं स्थिताः प्राणाः इति ॥

यद्वा षडध्वान आध्यात्मिका आधिभौतिका इति द्विधा । उभावपि शब्दार्थभेदेन द्विविधौ । तत्र शब्दरूप आध्यात्मिकः— "आकाशवायुप्रभवश्शरीरात्समुच्चरन् वक्त्रमुपैति नादः । स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यस्स शब्दः" ॥ इत्युक्तत्वात् प्राणवायौ वर्णा उत्पन्नाः । तद्द्वयात्पदम् । पदसङ्घो मन्त्रः । पदसाध्यत्वात् तत्वभुनकलाः पदस्थाः । कलावस्थानि तत्वानि तत्वस्थो भुवनव्रजः इत्याध्यात्मिकषडध्वरूपत्वम् । आधिभौतिकस्योच्यते—शक्तिबिन्दुनादाक्षराख्यानि बिन्द्वर्धचन्द्रकौटिल्यत्र्यश्राणि शिवे विद्यन्ते । चतुरश्रार्धचन्द्रौ च त्रिकोणं च षडश्रकम् । सुवृत्तं च पृथिव्यादिमण्डलाकृतयः क्रमादित्युक्तत्वात् वृत्ताद्यर्धचन्द्रत्र्यश्राणि आकाशजलवह्निमण्डलानि । वह्निद्वयेन षडश्रं तेन वायुः । त्र्यश्रचतुष्टयेन सकर्णचतुरश्रम् । तेन पृथ्वी सितम् । व्योमादिकं वृत्तमित्यादिश्रुतत्वात् गन्धादिशिवान्ततत्वानि शक्तिस्थानीति[1] तत्वं भुवनान्यपि भूतमण्डलाकृतिवस्तुत्वात् शक्त्यादौ[2] स्थितानि । निवृत्तिः पृथिवी ज्ञेयेत्यादिना पृथिव्यादिमण्डलस्था निवृत्त्यादिकलाः । इत्थं अर्थरूपोऽध्वा शब्दरूपाध्वा[3] स्थानत्रयः । प्रासादस्थार्धचन्द्रकौटिल्यत्रिकोणदण्डहलरूपैः पञ्चाशद्वर्ण[4]-रचनाप्रस्तारात् वर्णाध्वाऽपि प्रासादस्थः । पदाध्वा वर्णस्थः । पदस्थो मन्त्राध्वा । किंच धारणानां लवरयहकारास्सम्प्रकीर्तिता[5] इत्युक्तत्वात् धारणाकलास्तन्मन्त्रा लँवाद्या[6] अत्र दृश्यन्ते । उभौ स्थूलरूपौ । रेफलकारयकारास्सूक्ष्माँ[7] व्यञ्जनस्थाः । नादो रेफः । शक्तिनादबिन्दुभिर्लयौ । इति कलाध्वा । शक्तिर्नेत्रम् । तद्द्वयात् विसर्गश्चेत्यस्त्रम् । नादो वामः । अत्र ऊर्ध्वमुखनादो रेफः । अधोमुखनादो वामः । नादशक्तिभ्यां शिरः।

---

१. स्थानानीति पाठभेदः । २. शक्त्यादिस्थानानि इत्यपि पाठः । ३. शब्दरूपाध्वानस्त्रय इत्यपि पाठः । ४. पञ्चदशवर्णेति पाठभेदः । ५. धारणा लवरय इत्यपि पाठः । ६. लयवाद्या इत्यपि पाठः । ७. सूक्ष्मव्यञ्जन इत्यपि पाठः ।

अघोरस्स्पष्टः । शक्तिनादा[1]भ्यां पु[2]रुषद्वयेन कवचः । सद्यस्सीराभः हृदयं सीरद्वयरूपम् । शिखाऽर्धीशरू[3]पा । निष्कळप्रासादस्य शिखाऽघोरद्वयरूपः । प्रासादप्रणवाभ्यां तु नान्तरं परिकल्पयेत् । इतीशानाख्यः प्रणवप्रासादरूपः । "अकारो दक्षिणांसस्स्याद्वामांसस्स्यादुकारकः । मकारो मध्यदेशस्स्यात्तस्मात्रिः प्रणवात्मकः । हकारस्तस्य मध्ये तु संस्थितस्सर्वकारणम्" इत्यादिशुद्धाख्ये । 'दक्षिणाङ्गभवो ब्रह्मा हरिर्वामाङ्गसम्भवः । हृदयान्नीलरुद्रस्तु शिवस्य शिवसंज्ञक' इति शिवपुराणोत्तरे । एषां समष्टिरूपमूलः प्रसिद्धः । एवंविधाध्वव्याप्तिराचार्यैस्सूचिता—

शक्त्यादिशिववर्णा[4]न्तकार्यव्याप्ताध्वविस्तरः ।
परादिमूलपर्यन्तसकलाधारसंश्रयः ॥

नादस्त्रिरूपश्शास्त्रेऽस्मिन् साक्षात्प्रासाद ईरितः ।
तत्कार्यपङ्क्तिनिश्रेण्या व्युत्क्रमत्यागतोऽन्ततः ॥

कारणानां शिवस्साक्षात्क्रियते देशिकादिभिः ।
एषाऽनुभूतिस्सूक्ष्मत्वा[5]द्दुष्करा सुकरा पुनः ॥

शिवादिव्यञ्जमेधादियोगादेकप्रयत्नतः ।
मात्रोच्चारयुतो हेतुहीनोपादानयोरिति ॥

तस्यौषधादेरु[6]द्धारः प्रासादस्य शिवेरितः ।
अष्टत्रिंशत्कलाहेतुस्सद्याद्यैर्व्य[7]ञ्चसम्भवात् ॥

व्याप्तिर्व्यङ्गेयस्समुद्दिष्टा प्रासादस्य शिवागमे । इति ॥

अस्यार्थः—शक्त्यादि । शक्तिनादान्तादि शिववर्णो हकारः । **कार्यम्** आकाशादिमण्डलाख्यं वृत्ताद्यं व्याप्तषडध्वविस्तारः । पूर्वोक्त-

---

१. शक्तिनादद्वयाभ्यां इत्यपि पाठः । २. पुरुषस्थद्वयेन इत्यपि पाठः । ३. रूपः इत्येव मातृकापाठः । ४. दक्षरा इत्यपि पाठः । ५. व्यञ्जन इत्यपि पाठः । ६. धादिरुद्धारः इत्यपि पाठः । ७. वाङ्क इत्यपि पाठः ।

क्रमेण परचिन्तारहितस्सूक्ष्मरूपः । आदिशब्देन पश्यन्तीमध्यमे सूक्ष्मरूपे स्थिते । मूलस्थूलशब्दात्मा वैखरी । स्थूलं सूक्ष्मं परं ज्ञात्वा इति वचनादेवं त्रिरूपः । सकलानां त्रिबन्धानामाधारे वस्तौ संश्रयः आश्रयः । शिवशास्त्रे शिवागमे । नादः प्रासादः इतीरितः । व्युत्क्रमत्यागः अक्षरादिशक्त्यन्तः । कार्याणां तत्कारणानामाकाशादीनां[1] तदधिष्ठातॄणां ब्रह्मादीनां पञ्चदेशिकाद्यैश्शिवस्साक्षात्क्रियते । एवमनुभवस्सूक्ष्मत्वाद्दुष्करः । शिवादि शिववर्णादिशक्त्यन्तः । तेषां व्यञ्जो व्यञ्जकं । मेधादि मेधार्घीशविषबिन्द्वादयः । एकप्रयत्नतः । एकोच्चारेण । हानोपादानयोः हेयोपादेययोः[2] । हेयमकारः । उपादेयमुकारः । हेयोपादेयो मकारः । एवं बिन्द्वाद्याः । उन्मनी हेया[3] । तदनु उपादेया[4] । औषधादिः औकारादिः । शिवेरितः शिवेनोक्तः । तस्य प्रासादस्य मन्त्रोच्चारयुतः औषधादेरुद्धारो हानोपादानयोर्हेतुरिति शिवेरित इत्यन्वयः । एकार्थवाचकश्शब्दः तेनैवार्थेनान्यो यो गृह्यते स तदर्थव्यङ्ग्यम् । एकार्थवादकश्शब्दोऽप्यन्यार्थस्य वाचकश्चोक्तं व्यङ्ग्यम् । तस्माद्व्यङ्ग्यस्यार्थशब्दस्य[5] च यः प्रकरणप्रतिपाद्यस्य पर्यायः प्रासादः व्यङ्ग्यसम्भवात् । प्रासादस्य व्यङ्ग्यैस्सद्याद्यैरष्टत्रिंशत्कलाहेतुव्याप्तिरागमेषूद्दिष्टा इति अष्टत्रिंशत्कलाहेतुत्वमुच्यते । अर्धचन्द्रव्यश्चोन्मनीरहितकलानवकस्थबिन्दवः । पद्[6] ईशमुखं इत्युक्तत्वात् ते ईशानरूपाः । शिवार्घीशनादसमनोन्मनीषु कौटिल्यम् । सप्त तानि नरो मरुत् इति वचनात्पुरुषरूपाणि । रोधिव्यापिनीत्र्यश्रस्थं[7] त्रयम् । तानि अघोरस्तेजइति वचनादघोरकलारूपाणि । शिवमेधार्घीशविषार्धचन्द्रनादसमनास्थार्धचन्द्रा नव । जलं वाम इति वचनाच्च वामदेवरूपाः मेधार्घीश-

---

१. अकारादीनां इत्यपि पाठः । २. हेयोपादेययोरिति पाठभेदः । ३. हेय इति मातृकापाठः । ४. उपादेय इति मातृकापाठः । ५. स्योर्थशब्दस्येति मातृकापाठः । ६. पञ्चदश्य ईशमुखं इति पाठभेदः । ७. शिवनिरोधिव्यापिनीस्थत्र्यश्रं त्रय इति पाठभेदः ।

नादान्तव्यापिनीस्थसीरास्सप्त[1] ते सद्यः क्षितिरिति वचनात्सद्यरूपाः । एषां पञ्चदशसप्तत्रयनवसप्तानां समुच्चय एकचत्वारिंशत् । हल्मात्रो निष्कळत्वात् हल्स्वरूपाः[3] । वाचकशक्तिबिन्दुनादत्यागादीशानपुरुषवामानामेकैककलाह्रासेन त्रिकलान्यूनत्वम् । तदष्टत्रिंशत्कलाप्रस्तारेण[4] सिध्यतीति तात्पर्यम् । ह्रस्वप्रणवस्थसद्यवामाघोरैः पुरुषेशानस्थाकारद्वयतृतीयपञ्चमस्वरैः पञ्चकलाः । षट्दीर्घप्रणवस्थहृच्छिरश्शिखास्थप्रथमतृतीयपञ्चमानां[5] द्वयमिति षट्कलाः । कवचस्थप्रथमस्वरद्वयतृतीयस्वरनेत्रस्थमकारबिन्दुविसर्गैष्षट्कलाः । व्यस्तमेधास्थप्रथमस्वरद्वयपञ्चमस्वरैर्हकारस्थप्रथमस्वरेण[6] चतुष्कलाः । एवमव्यक्तैर्द्वाविंशतिकलाभिः व्यक्तैर्हृदयोर्ध्वस्थमेधादिमेषां शकलाभिरष्टत्रिंशत्कला आध्यात्मरूपाः । तथा प्रासादोपनिषदि—
"अष्टत्रिंशत्कलाधारमाधारमचिंतस्सुधीः[7] । आनन्दलतिका काचिदाशिवान्तं प्रकाशते" ॥ इति । इत्थं सद्यादिव्यङ्ग्यत्वमुक्तम् । अलमलमतिप्रसङ्गेन । प्रकृतमनुसरामः । एवं षडध्वगम् । शङ्करं शं भोगमोक्षरूपसुखं आत्मनां करोतीति शङ्करः तम् । निष्कळं वस्त्यादिनाभ्यन्तस्थनादरूपम् । प्रासादं नतोऽस्मि इति सम्बन्धः । प्रासादादभिन्ननिष्कळं[8] शिवमिति केचिद्याख्यापयन्ति । तदयुक्तम् । प्रासादस्यैवात्र व्याप्तेरुच्यमानतया वसुसागराङ्गुलचारित्वं न घटते । निष्कळत्वात् । पूर्वश्लोकोक्तसकळाकळसकळाकळानामपि परमशिवविषयतया व्याख्यापयन्ति केचित् । तत्रापि स्थूलशब्दात्मनो वैखरीरूपस्य सूक्ष्मशब्दात्मनो मध्यमापश्यन्त्याख्यस्य पराशब्दात्मनस्सूक्ष्मरूपस्य मन्त्रस्य सकळनिष्कळमिश्रत्वमुक्तम् । तथा कालोत्तरे—"स्थूलं शब्द इति प्रोक्तं सूक्ष्मं चिन्तामयं भवेत् । चिन्तया रहितं

---

१. मेधाघांशनादशक्तिव्यापिनी इति पाठभेदः । २. सपादे इत्यपि पाठः । ३. हल्स्वरूपवाचक इत्यपि पाठः । ४. तदाष्ट इति पाठभेदः । ५. द्वितीय इत्यपि पाठः । ६. व्यस्थ इति पाठभेदः । ७. मयत इति पाठभेदः । ८. प्रासादादिभिर्निष्कळं इत्यपि पाठः ॥

यत्तत्परं चेति प्रकीर्तितम्" ॥ इति । यद्वा आधिभौतिकाऽऽध्यात्मिकाऽऽधिदैवरूपा वा सकळाद्याः । "स्थूलं वर्णाकृतिं विद्यात्सूक्ष्मं तच्छब्द उच्यते । वर्णाभिमानितं यत्तत्परं चेति प्रकीर्तितम्" ॥ इति शुद्धाख्ये ॥ तस्मादुभयोश्श्लोकयोर्मन्त्रविषयव्याख्यैव युक्ता ॥ १४ ॥

चिद्व्यक्तिसंस्थित्यवलोकरोधै-
र्मुद्रोत्तरैरङ्गशिवैकभावैः ।
पाद्याचमार्घ्यप्रसवप्रदानै-
स्त्वदर्चनं जन्मफलं महेश ॥ ३५ ॥

चिद्व्यक्तीति । चिद्व्यक्तिः आवाहनम् । संस्थितिः स्थापनम् । अवलोकस्सन्निधानं । रोधः सन्निरोधः । तैरावाहिन्यादिमुद्रोत्तरैः । अङ्गशिवैकभावैः अङ्गभावः हृदयादीनां हृदयादिस्थानपूजात्मसकळीकारः मूलेनैकत्वं विधायेति वचनान्मूलपूजा शिवैकभावः । मुद्रोत्तरैः अवकुण्ठनसौधाख्यमुद्राभ्यामुत्तरैः । तदुक्तं शिवतन्त्ररहस्यसारे—"इत्येतान् गुणतः पूर्वमाहुतिस्थितिसन्निधीन् । संस्कारांश्चतुरः कृत्वा सन्निरोधं विपश्चिमान् । हृदयादिभिरस्त्रान्तैरङ्गैश्शिवविशेषणैः । अवकुण्ठनिरोधाख्यमुद्रा" इति । तदुक्तं—'विभुवन्नस्वभावानां यदि भिन्नं प्रयोजनम् । अङ्गानामङ्गिना साकममृतीकरणं हि तत्' इति । पाद्यं तत्पात्रात्पदाम्बुजे नमोन्तेन मूलेन देयमम्भः । आचमनं तत्पात्रात्स्वधान्तमूलेन वक्त्रेषु देयमम्भः । अर्घ्यं पञ्चसु मूर्धसु विशेषार्घ्येण स्वाहान्तेन देयमम्भः । हृस्वप्रासादम् (?) दाद्दूर्वाक्षतानां वौषडन्तमूलेन दानम् । तदुक्तं शिवतन्त्ररहस्यसारे—

पद्भ्यां निवेदयेत्पाद्यं दक्षहस्तेन सम्मुखम् ।
मुखेष्वाचमनं तद्वदर्घ्यं पञ्चसु मूर्धसु ॥

दूर्वापुष्पाक्षतादीनां दानं दशोपचारतः ।
नमसा च स्वधास्वाहावैषट्जातियुजा हृदा ॥

चतुष्टयमिदं तत्र परिपाद्य निवेदयेत् ॥ इति ॥

सिद्धान्तसारावळ्याम्—'आवाहनस्थापनसन्निधान निरोधनाकुण्ठनधेनुमुद्राः । पाद्यं तथा चाचमनार्घ्यपुष्पदानं स्मृतास्संकृतयो दशैव' ॥ इति । एवं त्वदर्चनं जन्मफलं महेश इति ॥ ३९ ॥

आवाहनादीनामर्थमभिदधाति[1]—

**आवाहनं स्वात्मनि चित्प्रकाश-**
**स्तत्र स्थितिस्स्थापनमीश्वरस्य ।**
**सान्निध्यमात्मेश्वरसन्निधानं**
**संरोधनं स्वस्य शिवे निरोधः ॥ ३६ ॥**

आवाहनमिति । आवाहनं स्वात्मनि मन्त्रद्वारा द्वादशान्तस्थपरशिवचितोर्ज्ञानक्रिययोस्स्वपरप्रकाशयोः प्रकाशो व्यक्तिरावाहनम् । तथा तेन—'व्यक्तिरावाहनं प्रोक्तं तिरोभावो विसर्जन'मिति । 'आमूलाग्रस्थितस्याग्नेरभिव्यक्तिर्यथा तरोः । तद्वदेकत्र चिद्व्यक्तिव्यापकं नास्य बाध्यते' ॥ इति ॥ अस्तु "अभिमुखीकरणं यत्तदावाहनमिहोच्यते" इति । सुप्रभेदोक्तश्च "आवाहनसान्निध्ये पूजाविज्ञप्तये त्वहम्" इति । सोमशम्भुवचनस्यापि चिद्व्यक्तेर्विरोधः । किञ्च स्वयम्भूतानां विरोधश्च । न विरोधो गुर्वनुगृहीतानाम् । लिङ्गपूजाभेदेन आवाहनं द्विविधम् । प्रतिष्ठाकाले लिङ्गे जीवन्यासरूपं यदावाहनं तच्चिद्व्यक्तिरूपम् । प्रत्यहं पूजाकाले यदावाहनं तदभिमुखीकरणम् । अभिमुखत्वमीशानवक्त्रस्य । तदुक्तं—'यस्यां दिशि भवेद्द्वारं तां प्राचीं परिकल्पयेत् । तत्र तत्पुरुषं वक्त्रमूर्ध्वंचाभिमुखं भवेत्' इति । 'ऊर्ध्ववक्त्रे तु दातव्यं सम्मुखं च पराङ्मुखम्' इति सर्वज्ञानोत्तरे । 'तत्रेशानस्सितोत्तानमूर्धस्थस्त्वतिभीषणः' इति कामिके ।

---

१. आवाहनादिदशसंस्काराणां वसनामभिदधातीति मातृकापाठः ।

तस्मादूर्ध्वमुखस्योत्तानस्य पूजाभिमुख्यकरणमावाहनम्। तन्मुखस्थेच्छा-ज्ञानक्रियारूपदृशां स्वस्मिन्नाभिमुख्येन प्रकाशश्चिद्व्यक्तिरनवद्या। तत्र स्थितिस्स्थापनमीश्वरस्य तत्र लिङ्गे स्थितिः चिद्व्यक्तेर्यावल्लिङ्गे स्थिति-स्तावन्नित्यतया स्थितिस्स्थापनम्। यावत्पूजा तावदाभिमुख्यं च। भक्त्या निवेशनं तत्र स्थापनं कथितं बुधैरिति। **सान्निध्यमात्मेश्वरसन्निधानम्** आत्मनः ईश्वरस्य सान्निध्यम् अभिमुखजातप्रासादपरम्पराभिसंन्निधानम्। अत्र पूज्यपूजकयोराभिमुख्यश्रुत्या तयोः कस्य सान्निध्यमाभिमुख्यमित्या-कांक्षाया निरासाय मुखनिर्णयः कथ्यते। 'तत्र सद्यानने मन्त्री स भवेत्सौ-म्यमानसः। सौम्यचित्तः प्रसन्नात्मा भवेत्सौम्यक्रियामख' ॥ इति पराख्ये। 'कृष्णाजिनेऽथवा प्राच्यां समासीनोप्युदङ्मुखः' इति ब्रह्मशम्भुः। 'देव-दक्षिणदिग्भागे सन्निविष्टस्सुखासने। उत्तरास्यो विनीतात्मा—' इति सोम-शम्भुः। 'रुद्र यत्ते दक्षिणमुखं तेन मां पाहि नित्यशः' इति श्रुतिः। 'अजातमिममेवैके मत्वा जन्मनि भीरवः। रुद्रस्यास्य प्रपद्यन्ते रक्षार्थं दक्षिणं मुखम्' ॥ इति पुराणे। तस्मादुत्तराभिमुखत्वं पूजकस्य। पूज्य-शिवो द्विधा। चलाचललिङ्गभेदेन। तयोस्स्थिरलिङ्गं द्वाराभिमुखम्। लोकानुग्राहकत्वात्। तच्चतसृषु दिक्षु स्वेष्टदिङ्मुखम्। तत्तद्दिग्वक्त्रस्य लिङ्गस्याग्नौ स्थित्वोदङ्मुखः शिवं पूजयेत्। तेषु प्रागास्यलिङ्गस्य शिव-वाक्यानि ज्ञानरत्नावळ्यां—"प्राचि तत्पुरुषं वक्त्रं हृदयोपरि शोभितम्। अघोरं दक्षिणे स्कन्धे वामस्कन्धे तु गुह्यकम्। सद्योजातं प्रतीच्यां तु ....संस्थितम्" इत्यादि। "प्राङ्मुखावीशपुरुषौ" इत्यादि। "ध्यायेत्सदा-शिवं देवं प्राङ्मुखेशास्यवक्षसम्" इत्यादि। "न विभोः पुरतस्तिष्ठेन्न-पश्चात्स्त्र्यन्तिके न च। अघौघध्वंसमोक्षार्थं दक्षे दक्षस्थितोऽर्चयेत्" इति। "न प्राच्यामग्रतश्शम्भोर्नोत्तरे योषिदाश्रये। न प्रतीच्यां यतः पृष्ठं तद्-

---

१. स्वात्मनि इति पाठभेदः। २. परम्पराभिस्सन्निधानमिति पाठभेदः।
३. यथा इति पाठभेदः।

क्षेऽभीष्टमर्चयेत्" इति । इत्यादिवचनानि प्रागास्यस्थिरलिङ्गविशेषणानि । स्थिरलिङ्गेषु प्रागास्यस्यैव प्रकृतित्वात् । तदुक्तं—"सदा पूर्वाननं स्थाप्यं स्थाप्यं वा पश्चिमाननम्" इति । "श्रेष्ठं पश्चान्मुखं लिङ्गमभावात्प्राङ्मुखं भवेत् । याम्यकौबेरवक्त्रं तु न सिद्धाविष्यते बुधैः" इति । अथ दक्षिणपश्चिमोत्तरवक्त्रलिङ्गस्य विषयवचनानि—"यस्यां दिशि भवेद्द्वारं तां प्राचीं परिकल्पयेत् । लिङ्गस्याभिमुखं तत्तत् द्वारं तत्पूर्वमिष्यते ॥ तत्र तत्पुरुषं वक्त्रमूर्ध्वंचाभिमुखं भवेत् । बलिपीठं वृषं शूलं तद्वक्त्राभिमुखं भवेत्" । इति वचनात्तद्दक्षिणवक्त्रस्य लिङ्गस्य पुरोभागो[2] दक्षिणत्वाद्दक्षिणदेवस्य पुरः पूर्वादिगिति न्यायादस्याः पूर्वादिगिति संज्ञा । तत्र[3] तत्पुरुषं वक्त्रमूर्ध्वंचाभिमुखं भवेत् । एवं पश्चिमास्यस्योत्तरस्यस्यापि नेयो द्वारार्थः । एवं वक्त्रभेदोऽपि । 'नित्ये नैमित्तिके काम्ये सर्वाधिकरणस्सदा । शिवः पूर्वाननो लक्ष्मि प्रत्यक्पृष्ठः कलातनुः' इति । "दीक्षाचैव प्रतिष्ठा च ज्ञेयं नैमित्तिकं द्विधा" इति श्रुत्या दीक्षाप्रतिष्ठयोर्यज्ञरक्षकस्य कुम्भाधिकरणस्य शिवस्य पश्चिमद्वारमण्डपत्वात् द्वाराभिमुख्यास्थित्या शुद्धपश्चिममुखत्वं गौणपूर्वमुखत्वं च घटते । बृहत्कवचभार्गवे—'दीक्षादौ कलशाधारे तमेव प्रत्यगाननम्' इति । सूर्यपूजायां तस्यापि "पूर्वास्यो भानुमर्चयेत्" इति वचनात्तस्य पश्चिमवक्त्रस्य गौणपूर्वमुखत्वं घटते । "पूर्वाग्नियाम्यकुण्डानां योनिस्स्यादुत्तराननना । पूर्वानना तु शेषाणामीशानेऽन्यतरा तयोः" इति प्रोक्तत्वात्कुण्डस्य योनेरेव मुखत्वात्तन्मुखै[4]स्यैव मण्टपस्य द्वारत्वात्कुण्डस्याभिमुखं द्वारम् । तस्माद्धोतुरभिमुखस्याग्नेर्द्वाराभिमुखेशानवक्त्रत्वेन गौणपूर्वमुखत्वं च घटते । तथा च चतुश्शतिकालोत्तरे—'ऊर्ध्ववक्त्रे महासेन आहुतिं सम्प्रदापयेत् ।

---

१. प्रागास्यमेव इति मातृकापाठः । २ पुरोभागस्येति स्थातव्यमिति भाति । ३. तत्र तत्पुरुषमित्येतच्छ्लोकार्धं: कासु चिन्मातृकासु न लभ्यते ॥ ४. तन्मुखमेव इति मातृकापाठः ॥

तत्पादपाणिपृष्ठे तु तस्मिन् पूर्णाहुतिस्स्मृता' इति ॥ "लिङ्गं वा प्रतिमा वा क्रियतेऽन्यद्वा यया ककुभा । तस्यां तस्यां यज्वा यजेत शिवमुत्तराभिमुखः" इति वचनादुत्तरवक्त्रलिङ्गस्योत्तरादिग्पूर्वादिगेव । तत्तत्पूर्वादिदिग्वक्त्रस्य गौणोत्तरवक्त्रत्वं घटते । "अग्नौ वा निर्ऋतौ वाऽपि स्थित्वा देवं प्रपूजयेत्" इति वचनान्नैर्ऋतदिगेव पूर्वमुखस्य गौणोत्तरवक्त्रत्वम् । पूर्वद्वारस्याग्नौ स्थितत्वादुत्तरवक्त्रत्वं घटते । पश्चिमद्वारे[1] तु नैर्ऋतस्थस्य शुद्धोदग्वक्त्रत्वं घटते । यद्वा[2] गौणाग्नौ वायुदिशि स्थितस्य गौणोत्तर[3]दिग्वक्त्रस्य गौणोत्तरवक्त्रत्वं घटते । एवमुत्तरद्वारस्य ईशानदिग्स्थितस्य पश्चिमवक्त्रस्य गौणाग्निदिग्स्थितत्वं गौणोत्तरमुखत्वं च घटते । तस्मान्मुण्ड[4]भङ्गिपूजायां पुरुषादीनामपि याम्यद्वारस्य दक्षिणपश्चिमपूर्वोत्तरस्थितिः । पश्चिमद्वारस्य पश्चिमोत्तरदक्षिणपूर्वस्थितिः । उत्तरद्वारस्य उत्तरपूर्वपश्चिमदक्षिणस्थितिः । एवं द्वारानुगुणं पञ्चावरणानां स्थितिर्योज्या । तथा पञ्चगव्यपञ्चामृतादिस्थापनं द्वारानुकूलमेव स्थाप्यमिति कारणे प्रोक्तम् । अन्योऽपि पक्षः "प्रासादस्य द्वारं भवतु यया काष्ठया कामम् । तत्पुरुषादिमुखानि तु न जहति पूर्वादिदिग्संस्थाम्" ॥ इत्युक्तत्वादूर्ध्ववक्त्रहृदयगुह्यचरणानां सदाशिवनाथस्य ध्वजवृषभशूलबलिपीठानां द्वारानुकूलत्वम् । पुरुषादिमुखानां मुण्डभङ्गिस्थानां पञ्चावरणसंस्थानामपि भेदो नास्तीति केषाञ्चित्पक्षः । एवंविधोभयपक्षोऽपि सम्मत इति कामिके । तत्र पश्चिमद्वारार्चनपटले—

द्वारस्याभिमुखं चोर्ध्ववक्त्रं देवं प्रकल्पयेत् ।
वामे वा दक्षिणे वाऽपि स्थापनीया मनोन्मनी ॥

---

१. पश्चिमद्वारस्तु इति मातृकापाठः । पश्चिमद्वारे पूजकस्य नैर्ऋतस्थित्यनौचित्यात् अत्र "दक्षिणद्वारे तु नैर्ऋतस्थस्य प्राचीरूपगौणोदग्वक्त्रत्वं घटते" इति स्याच्चेद्वरमिति भाति । २. यद्वा इत्यस्य स्थाने पश्चिमद्वारे तु इति स्थातव्यमिति भाति । ३. गौणोत्तरदक्षिणवक्त्रस्य इति पाठभेदः । ४. दण्डभङ्ग्यादिपूजायां इत्यपि पाठः ॥

देववन्मुखसंयुक्ता द्विहस्तैकमुखान्विता ।
ईशानमीशदेशे वा निर्ऋतौ वा समर्चयेत् ॥
पुरुषं पूर्वदेशे वा पश्चिमे वाऽथ चिन्तयेत् ।
दक्षिणे चोत्तरे वाऽपि बहुरूपं विचिन्तयेत् ॥
उत्तरे दक्षिणे वाऽपि वामदेवं स्मरेद्गुरुः ।
पूर्वस्यां पश्चिमस्यां च चतुर्दिक्ष्वस्त्रमर्चयेत् ॥
पश्चिमे पूर्वदेशे वा सद्यवक्त्रं स्मरन् यजेत् ।
हृदयं चाग्निदिग्भागे वायव्यां वा प्रकल्पयेत् ॥
शिरश्चैशे च नैर्ऋत्यां शिखां पितरि वैशिके ।
कवचं वायुदिग्भागे आग्नेय्यां वा प्रकल्पयेत् ॥
पूर्वस्मात्पश्चिमाद्वाऽपि विद्येशावरणं यजेत् ।
गणेशावरणं सोमाद्दक्षाद्वाऽऽरभ्य चार्चयेत् ॥ इति ॥

तत्र दक्षिणद्वारार्चनपटले—

पूजयेत्पूर्ववक्त्रं तु शिवं षड्गुणसंयुतम् ।
लिङ्गार्चनं चेत्प्राग्वत्स्यादीशानं तु स्वगोचरे ॥
अघोरं पुरुषं वाऽपि दक्षिणे सम्यगर्चयेत् ।
अघोरं वाऽथ सद्यं वा पश्चिमे सम्यगर्चयेत् ॥
सद्यवक्त्रं तु वामं वा सौम्यदेशे समर्चयेत् ।
पुरुषं वाऽथ वामं वा पूर्वस्यां दिशि चार्चयेत् ॥
ईशानमग्निदेशे तु न्यसेत्पूर्वे मनोन्मनीम् ।
पितृवाय्वग्निईशेषु हृदयादि व्यवस्थितम् ॥
अथवा प्राग्वदेव स्याद्विद्येशा दक्षिणादितः ।
गणेशाः पूर्वदेशे वा प्राग्वद्वा सम्प्रकीर्तिताः ॥
अनेनैव प्रकारेण न्यायेनान्वीक्ष्य देशिकः ।
सौम्यवक्त्रेशपूजाद्यं कारयेद्देशिकोत्तमः ॥

किमत्र बहुनोक्तेन यस्य देवस्य यन्मुखम् ।
तस्य देवस्य सा प्राची निश्चिता द्विजसत्तमाः ।।
तद्वशादपराः कल्प्या दिशो दिग्वेदिभिस्सदा । इति ॥

एतानि वचनानि स्थिरलिङ्गविषयत्वान्न चरलिङ्गसाधकानि भवन्ति। "स्थण्डिले चललिङ्गे च साधकाभिमुखश्शिवः । प्रत्यग्वक्त्रस्तु कुम्भादौ स्थिरे द्वाराभिसम्मुखः" इति वचनात्पूजकस्य उत्तरवक्त्रत्वं पूज्यशिवस्य दक्षिणदिङ्मुखत्वं च सिद्धम् । तथा सुप्रभेदे—'अभिमुखीकरणं यत्तदा-वाहनमिहेष्यते' । इत्याभिमुख्यलिङ्गानि । सोमशम्भुः—'ध्यायन्नभिमुखं देवं पञ्चवक्त्रं सदाशिवं' इति । तेनैव—'सादरं सम्मुखीभावमावाहनमिहो-च्यते' इति। ब्रह्मशम्भुः 'ध्यात्वाऽत्र सकळोपाधिविग्रहं सम्मुखं शिवं' इति ॥ एतानि चललिङ्गविषयवचनानि । अथ स्थण्डिललिङ्गविषयवचनानि—किरणे—'प्रविश्याभ्यन्तरं तस्य दक्षिणामूर्तिकस्य च । उदङ्मुखः क्षिपे-त्पुष्पं तत्पातनमकारयेत्' ।। इति । मृगेन्द्रे—'कृत्वाभिमुखमादाय कुसुमा-न्यञ्जलौ पुनः। त्याजयेत्....' इति । तत्र—'दक्षिणस्यां प्रभोर्मूर्तौ विदध्या-त्प्रणवासनम्' इत्यधिवासे । 'वाससी परिधायैनं निविष्टं सकळीकृतम् । पाणौ गृहीत्वा देवस्य दक्षिणस्यां तनौ न्यसेत्' । तत्रैव—'कर्मणोऽन्ते बलिं दत्वा ब्रूयान्नीत्वा पुनः प्रभोः । व्याख्येयश्श्रुत अर्थस्तु श्रोतव्यश्च त्वयाऽन्यत' इति । 'पुष्पाञ्जलिसमायुक्तं दक्षिणामूर्तिमानयेत् । शिव-स्याभिमुखं स्थाप्य ततः पुष्पाणि पातयेत्" इति । ब्रह्मशम्भुः—"सह-साऽऽलोकितेशानशिववक्त्रसरोरुहम् । ब्रूयात्त्वमङ्ग मुञ्चेति प्रसूनं शिव-सम्मुखम्' इति । शिवस्य दण्डभङ्गिस्थिततत्पुरुषवक्त्रस्य दक्षिणादिग्पूजना घटते । 'यस्यां दिशि भवेद्द्वारं तां प्राचीं परिकल्पयेत्' इति पक्षस्यापि द्वारपरत्वात् तत्पुरुषादिमुखानि तु न जहति पूर्वादिदिग्संस्थां इत्युक्तः पक्षः । मुण्डभङ्गिपक्षस्साधकाभिमुख्यस्याङ्गीकर्तव्यः । अस्मिन् पक्षे ईशानब्रह्मणो

१. यथा यस्याङ्गसम्मुखं इति कामिकागमपाठः । २. स्थितो द्वारा इति पाठभेदः ।

मूर्धा ईशानमूर्धा । ईशानब्रह्मणो वक्त्रं तत्पुरुषवक्त्रम् । हृदयम् अघोरहृदयम् । एवं वामसद्यौ । इति दक्षिणादिशि तत्पुरुषवक्त्रत्वं घटते । स्थिरलिङ्गं तावल्लोकानुग्रहार्थत्वात्तेषां साधकाभिमुखमेव ईशानवक्त्रम् । तस्मिन्नेव वक्त्रे नैवेद्यं देयम्। तदुक्तं—'पञ्चवक्त्रेषु नैवेद्यमूर्ध्ववक्त्रेऽथवा पुनः' इति। 'भक्ष्यभोज्यान्नपानादि लेह्यं शोष्यमनेकशः । ऊर्ध्ववक्त्रे तु दातव्यं यत्किञ्चिद्विधिचोदितम्' इति सर्वज्ञानोत्तरे । 'भक्ष्यं भोज्यं च पेयं च लेह्यं शोष्यं च पञ्चधा । ऊर्ध्ववक्त्रे प्रदातव्यं हृदयेन षडानन' इति द्वादशशतिकायाम्। 'नैवेद्यं दक्षिणे हस्ते दद्यात्पानीयमुत्तमम्' इति कामिकश्रुत्या साधकेन दक्षिणहस्ते नैवेद्यादि देयम् । तेनोर्ध्ववक्त्रेण भोज्यमितिभावयेत्। तदा हस्तोद्वर्तनस्य शिवस्य सिद्धिः । अन्यथा साधकेन दक्षिणहस्तेन नैवेद्यमूर्ध्ववक्त्रे देयं चेच्छिवस्य तदा हस्तोद्वर्तनस्य नावकाशः । साधकहस्तस्य निर्माल्यानुषङ्गश्च प्रतिरोधकं[1] च भवति। तस्माद्धस्ते नैवेद्यमेव साधु गतम्। इत्यूर्ध्ववक्त्रस्य वचनादागमवाक्यैः युक्त्या दक्षिणवक्त्रत्वम् । तद्दिग्स्थहृद्गुह्यपादत्वं च स्वेष्टलिङ्गस्य साधितम् । तस्य पूजकस्य आभिमुख्यप्रसादः सन्निधानम् । तदुक्तं रौरववृत्तिविवेके — यथा विशिष्टा स्थितिरिति तदनुग्राहकत्वेनाभिमुखीभावो[2] विशिष्टं सान्निध्यमिति । **संरोधनं स्वस्य शिवे निरोधः ।** "आकर्मकाण्डपर्यन्तं सन्निधेर्योऽपरिक्षयः । स शम्भोर्व्यापकत्वेन निरोधः परिगीयते" इति तेनापि । स्वस्याऽऽत्मन आकर्मकाण्डपर्यन्तं शिवे विशेषसन्निधेर्यो निरोधः अपरिक्षयः तद्विशेषसन्निधेरपरित्यागस्संरोधनम् इति ॥ ३६ ॥

**नमोऽस्तु संज्ञानहृदे भवाय**
**नमो गुणैश्वर्यविशिष्टमूर्तये ।**
**नमोऽपराधीनवशित्वरूप[3]**
**शिखाय तेजः कवचात्मने नमः ॥ ३७ ॥**

---

१. प्रतिविरोध । इति पाठभेदः । २. भावाविशिष्टम् इति पाठभेदः ।
३. शिवत्वरूप इति पाठभेदः ।

नम इति ॥ **संज्ञानहृदे** । ज्ञानरूपहृदयाय । तदुक्तं—हृदयं तस्य चिच्छक्तिरिति च सद्भावो हृदयं तस्य इति च चिच्छक्तिर्हृदयं शम्भोः इति च शिवतन्त्ररहस्यसारे । **गुणैश्वर्यविशिष्टमूर्तये** । गुणा ऐश्वर्यं गुणैश्वर्यम् । गुणरूपेणैश्वर्येण या विशिष्टमूर्तिः तस्मै । गुणस्त्रिधा । इच्छा ज्ञानं क्रिया चेति । ज्ञानं द्विधा । सविकल्पकं निर्विकल्पकं चेति । तत्राऽऽद्यं भोगाधिकारयोः । द्वितीयं लये । तथोक्तं पौष्करे—"विकल्पयोगायोगाभ्यां तच्च द्विविधमिष्यते । वस्तुस्वरूपमात्रस्य ग्रहणं निर्विकल्पकम्" ॥ तत्रैव—"शक्तोऽयं शक्तयो यस्मादुद्योगादिक्रियाच्युताः । शिव एव हि तिष्ठन्ते निष्कळश्च स एव तु ॥ उपसंहृतकार्यात्मा यदा बिन्दुर्व्यवस्थितः । तदा लयाह्वयं तत्वं शिवतत्वं तदा भवेत्" । इति । तत्रैव—"नामजात्यादिसम्बन्धसहितं सविकल्पकम् । एतच्चेन्द्रियसापेक्षं निरपेक्षं तथैव च ॥ तत्रेन्द्रियानपेक्षं च सर्वधा त्यक्तबन्धया । चिच्छक्त्या निखिलैर्थैषु योगस्स्वाभाविको मत" इति । क्रिया द्विधा । सङ्कल्परूपा कारणरूपा चेति । आद्या शिवस्य मुक्तानां च । अपरा बद्धानाम् । तदुक्तं पौष्करे—'न हि सङ्कल्पमात्रेण कुलालैः क्रियते घटः । शिवस्सङ्कल्पमात्रेण बिन्दुक्षोभकरस्सदा' ॥ तत्र—'अधिकारे क्रियोद्रिक्ता कार्येष्वविकृता यतः । कार्यं च करणीयं च गुणसङ्कल्पसंस्मृतिः ॥ न तु व्यापार इत्युक्ता विभोस्तद्विषया स्मृतिः । तस्माज्ज्ञातृत्वकर्तृत्वे ज्ञानरूपे इति स्थिते' इति । तस्माद्विश्वस्य गुणस्मरणसङ्कल्प एव क्रिया शिवस्य । सा पञ्चधा । सृष्ट्यादिभेदेन । तदुक्तं—'तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः । ईशतत्पुरुषाघोरवामाजैर्मस्तकादिकम्" ॥ इति । इच्छया सर्वार्थविषयसविकल्पकनिर्विकल्पकज्ञानाभ्यां सृष्ट्यादिपञ्चकृत्यैरष्टविधैश्वर्य-

---

१. तदुक्तं इति पाठभेदः । २. तदेव हि इति पाठभेदः । ३. कर्मेन्द्रिया इति पाठभेदः । ४. अनन्तयोगाच्च इति पाठभेदः । ५. गुणरूप इति पाठभेदः ।

रूपं शिरः । विशिष्टमूर्तिरिति वराङ्गं तेन शिरः । तथा अमरदत्तेनाऽपि "वराङ्गं मूर्ध्नि गुह्ययोः" इति । तच्छिरोऽष्टैश्वर्यरूपम् । तदुक्तं शिरश्चैश्वर्य-मष्टधा इति च। अष्टैश्वर्यं शिरस्स्मृतमिति च शिवतन्त्ररहस्यसारे । अत्राणि-माद्यष्टैश्वर्यमिति व्याख्यापयन्ति । तदयुक्तम् । "त्रितयं[1] देहतस्सिद्धमि-न्द्रियैः पञ्चभिर्मतम्" इत्युक्तत्वात् सकलानामेवैश्वर्यं तथाविधमिति न निष्कळानां तस्मादुक्ता व्याख्यैव निरवद्या । **अपराधीनवशित्वरूपाशि-खाय** वशित्वं स्वातन्त्र्यम् । तच्च स्वाधीनं स्वतस्सिद्धम् । मुक्तात्मवदी-श्वरान्तरव्यापारेण मलापोहनद्वारेण अभिव्यक्तस्वातन्त्र्यं नेत्यर्थः । अना-दिसिद्धस्वातन्त्र्यरूपा या शक्तिस्सैव शिखा । तदुक्तं—'वशित्वमपरा-धीनं तच्छिखा सोपरि स्थिता । नान्याधीनं वशित्वं यत्सा शिखोपरि वर्तिनी' । इति च । 'अनन्याधीनतां शम्भोर्वशिता या शिखा परा' इति च शिवतन्त्ररहस्यसारे । **तेजः कवचात्मने** दृक्क्रियाशक्तिरूपकिरणमेव कवचम् । "किन्तु स्वदृक्क्रियाशक्तिकिरणात्मकमव्ययम्" इति पौष्करे । 'दिनकृन्मण्डलाकारदृक्क्रियामण्डलाञ्चितः' इति पराख्ये । 'तेजः कवच-साधर्म्यात्तन्नाम्ना व्यपदिश्यते' इति मृगेन्द्रे । 'अभेद्यं परमेशस्य तेजः कव-चमुच्यते । तेजश्शर्वस्य दुर्भेद्यं वर्मत्वेन विनिर्मितम्' । इति शिवतन्त्र-रहस्यसारे ॥ ३७ ॥

**नमः पशूनां मलकृन्तनक्षमा**
**सहप्रतापास्त्रधराय शूलिने ।**
**नमोऽविकाराय षडङ्गमूर्तये**
**सदाशिवायामृतरूपिणे नमः ॥ ३८ ॥**

नमः इति ॥ **पशूनां मलकृन्तनक्षमासहप्रतापास्त्रधराय** पशूनामात्मनां मलकृन्तनक्षमं मलापनयनसमर्थं असहं परेषां दुस्सहम् । यः प्रतापो बलं

---

१. तृतीयं इति पाठभेदः ॥

तदेवास्त्रम् । तादृग्विधास्त्रधराय । तदुक्तं—"योऽसावप्रसहश्शम्भोः प्रतापो हेतिरुच्यते । सोऽस्त्रमस्य तु येनाघं दूरमन्तरितं भवेत् । प्रतापो दुस्सहश्चास्त्रमन्तरायापहारकम् । प्रभोः प्रतापः प्रथितश्शस्त्रं स्यादघनाशनम्" इति शिवतन्त्ररहस्यसारे । षडङ्गमूर्तये तदपि अविकाराय हृदयादीनामुच्यमानशुक्लपीतकृष्णरक्तस्वर्णरूपविकाररहिताय । अनेनाङ्गपूजानन्तरं मूलार्चनमप्युक्तम् । तदुक्तं—"मूलेनारोप्य देवस्य पुष्पं शिरसि मन्त्रितम् । शिवैकवर्णतां ध्यायेदङ्गानामाननं विना" इति शिवतन्त्ररहस्यसारे । अमृतरूपिणे शुक्लवर्णाय । सदाशिवाय पुरुषाघोरवामाननेषु पीतकृष्णरक्तवर्णविकृतियुक्ताय इति सदाशिवपदस्याभिप्रायः । तद्व्यतिरिक्तशिवमूर्तेरुद्रेश्वरादेस्तादृग्लक्षणत्वाभावात् । एवंभूताय शूलिने नमः । शूलीतिपदेन त्रिशूलोढ्यसदाशिवध्यानमेवास्माकं वरमित्यभिप्रायः ॥ ३८ ॥

> **स्वभावशुद्धस्य शिवस्य पाद्य-**
> **माचाममात्मीयविशुद्धिहेतोः ।**
> **अर्घ्यप्रदानं कुसुमार्पणं च**
> **सदेशधामाप्तिनिमित्तमेतत् ॥ ३९ ॥**

स्वभाव इति ॥ **स्वभावेन शुद्धस्य** अनादिमुक्तस्य । **शिवस्य** निष्कळस्य निर्विषयत्वात्तदुद्देशकृताः पाद्यादयः **आत्मीयविशुद्धिहेतोः** स्वकीयमलशोधनकारणात् **एतत्सदेशधामाप्तिनिमित्तं** सदाशिवसायुज्यनिमित्तम् । तत्कथं—शिवस्य धामव्यापिकाश्शक्तयस्ताः पादौ । ताभिश्शक्तिभिस्स्वस्य यत्सामरस्यं तत्पाद्यदानम् । वचनत्राणरूपाश्शक्तयो वक्त्रम् । ताभिस्सामरस्यमाचमनम् । यास्सकलजगत्प्रेरकरूपाः प्रभुशक्तयस्ताश्शिरः । ताभिस्सामरस्यमर्घ्यकुसुमार्पणे इति मुमुक्षूणाम् । बुभुक्षूणां

---

१. प्रतापोऽवारितः परैरित्यपि पाठः । २. त्रिशूलस्य सदाशिव इत्यपि पाठः ॥

तु सदाशिवधाम सदाशिवस्थानम् । तद्विद्यातत्त्वाल्लयशिवान्तम् । विद्यातत्त्वास्पदाचार्य इति वचनात् । शुद्धतत्त्वेष्वीश्वरसदाशिवशिवतत्त्वसायुज्यप्राप्तये पाद्याचमार्घ्यकुसुमप्रदानम् । तदुक्तं शिवतन्त्ररहस्यसारे—

साधकस्येशतत्त्वाख्यपदापादकमुद्धृतम् ।
पाद्यं पादाम्बुजद्वन्द्वे बिन्द्वन्तं शम्भुशम्बरम् ॥

पुष्पं[1] नमोऽन्तमुच्चार्य शिवाय विनिवेदयेत् ।
सदाशिवपदप्राप्तिहेतुमाचमनीयकम् ॥

शम्बरं ब्रह्मरन्ध्रान्तं समुच्चार्य स्वधान्तकम् ।
पुरुषाघोरवामाजेशाख्येष्वास्येषु पञ्चसु ॥

पात्रमुत्क्षिप्य देवाय प्रदद्याद्देशिकोत्तमः ।
ईशतत्पुरुषाघोरवामाजातान्तमूर्धसु ॥

स्वाहान्तं मूलमुच्चार्य द्वादशान्तपदावधि ।
शिवतत्त्वपदप्राप्तिहेतुमर्घ्यं सपुष्पकम् ॥

समन्त्रकं[2] समुत्क्षिप्य दद्याद्देवाय बुद्धिमान् ।
शिवमन्त्रं समुच्चार्य वौषडन्तं शिवान्तकम् ॥
ईशादिसद्यपर्यन्तेषूत्तमाङ्गेषु पञ्चसु ।
आत्मज्ञानमयं पुष्पं शिवसायुज्यकारणम् ॥ इति । ॥ ३९ ॥

स्नानं स्वात्ममलापहं शुभमयैर्गन्धैस्समालेपनं
सद्वस्त्राभरणं सुगन्धिकुसुमैर्मालाभिरभ्यर्चनम् ।
सालङ्कारसदाशिवस्य विधिवद्धूपप्रदानं त्वणोः
भोगार्थं हि सदेशधाम्नि विमलं दीपं शिवज्ञानदम् ॥४०॥

---

१. पुष्पैरित्यपि पाठः । २. सयन्त्रिकं इत्यपि पाठः ॥

स्नानमिति ॥ स्नानम् अभ्यङ्गादिजलाभिषेकवस्त्रपरिमार्जनान्तो विधिः स्नानम्। तत् स्वात्ममलापहं स्वात्मनो मलापनयनहेतुः। एतत्स्नानं चाऽऽत्मार्थलिङ्गानां लिङ्गशुद्ध्यनन्तरं चलासनपूजां कृत्वा पञ्चगव्यादिभिर्विस्तरं संस्नाप्याऽऽवाहनादिदशसंस्कारानन्तरं मनसाऽभ्यङ्गादीनर्घ्यजलेन स्नानं च कर्तव्यमिति केचिद्वदन्ति। तान् ब्रूमः। प्रथमं तावत् कामिकादिशिवज्ञानेषु तथाविधश्रुत्यभावात्। किञ्च। "संहृतौ विकिरास्त्राणामासनं तु चलाचलम्। सङ्कल्प्य मूर्तिमन्त्रेण मूर्तिभूतं घटं न्यसेत्"। तत्र—"शिवाज्ञां श्रावयन् कुम्भं भ्रामयेदग्रतोऽस्त्रकम्। विन्यसेत्कुम्भवर्धन्यौ पूर्ववत्तदनन्तरम् ॥ स्थिरासनं च सम्पूज्य देवमस्त्रं च पूजयेत्"। इति कामिकश्रुत्या च—"सुगन्धैर्गन्धपुष्पाद्यैः पूजयेत्कलशं वरम्। सासनेन सदेहेन शिवेन समधिष्ठितम् ॥ एवं शस्त्रालुकां चेष्ट्वा लोकपान् पूजयेत्क्रमात्। शिवयागस्समारब्धस्तद्भक्तानां शिवाज्ञया ॥ रक्षणीयोऽन्तरायेभ्यो लोकपैस्सुसमाहितैः। इत्याज्ञां श्रावयन् कुम्भं भ्रामयेदग्रतोऽस्त्रकम्। प्रदक्षिणक्रमेणाथ स्थापयेत्कलशालुके। दत्वा चलासनं पूर्वं विन्यसेत्तदनन्तरम्। धारिकादिक्रमेणैव यावत्स्यात्कमलासनम्" इति। मोहशूरोत्तरश्रुत्या च "चलं पङ्कुत्थकं दत्वा पश्चिमास्यं वृषस्थितम्" इति स्वतन्त्रश्रुत्या च साङ्गं भगवन्तमावरणरोधरहितं सम्पूज्येति परमाचार्योक्त्या च चला[1]र्थपङ्कुत्थासनावाहनादिदशसंस्कारानन्तरं शिवकुम्भवर्धन्योश्चलत्वविधानात्तदेव चललिङ्गचलासनपूजाविधानश्रुतिः। पुनस्स्थिरासनपूजायाश्च कुम्भोक्तवचनमेव चलानां प्रमाणमिति केचिद्वदन्ति। तान् प्रति ब्रूमः। कुम्भवर्धन्योस्स्थिरयोर्मण्डपविघ्ननिरसनोपाधियुक्तयोश्चलस्थिरासने पूज्ये। स्वभावतश्चलानां स्थिरासनत्वं कथं पूज्यते। यावच्चित्सन्निधिस्तावच्चलनं तन्न युज्यते। लक्षं तु स्थिरमुन्मूल्येति सोमशम्भुवचनात् स्थिरा-

१. चलात्म इति पाठभेदः।

सनपूजितस्य लिङ्गस्य चलने लक्षाघोरजपः कर्तव्यः। स्थिरासनपूजितानां लिङ्गानां स्थिरलिङ्गमिति नाम। चलासनपूजितानां लिङ्गानां चललिङ्गमिति नाम। लिङ्गस्य स्थिरत्वचलनत्वे कथमाधारशक्तिन्यासः। पीठं वा। तथा सोमशम्भुपादैः—

विधिस्तु चललिङ्गानां सम्प्रत्येव निगद्यते।
सपीठेष्वपि तद्वत्स्याल्लिङ्गेषु किञ्च भेदतः॥
इष्टमन्त्रेण संस्कारो विधिवत्स्फाटिकादिषु।
किन्तु ब्रह्मशिलारत्नप्रभृतेस्तु निवेशनम्॥
'योजनं पिण्डिकायाश्च मनसा परिकल्पयेत्'। इति।

पिङ्गळामतवृत्तौ रामकण्ठेनापि 'व्यापिन्यामाधारशक्त्यवस्थायां सर्वदा स्थिरम्'। यथेष्टस्थानसञ्चारपूर्वकं पूजकनिरूपणात्तु चलनमिति। ओं नमो व्यापिनि अस्थिरे अचले ध्रुवे ह्रीं स्वाहेत्याधारशिलामन्त्रलिङ्गाच्च साधारणाशिलानां लिङ्गानां सर्वदा स्थिरासनपूजा च स्थिरत्वं च। आधारशिलारहितानां लिङ्गानां प्रतिमानां पक्वमृच्छिलादारुदन्तलोहरत्नकृतलिङ्गबेराणां सर्वदा चलमेवासनम्। चलत्वं च तस्मात्तेषाम्। 'किञ्च पूज्यमानं यदा लिङ्गं हस्तादिस्पर्शतो मनाक्। चलितं घोरमन्त्रस्य शतं शेषक्रियां नये'दिति ज्ञानरत्नावळीवचनेन पूजामध्ये चलनस्य प्रायश्चित्तमस्तीति केचिद्वदन्ति। तत्सत्यम्। पूज्यमानमिति शब्दबलेन पूजाकाले न चलनं युक्तम्। उपचारकाल एव पूजाकालः। तथा सोमशम्भुपादैः—'एवं संस्कृत्य संस्कारैर्दशभिः परमेश्वरम्'। इति। कामिकेऽपि—"कृत्वैव दशसंस्कारानुपचारैः[1]शिवं यजेत्" इति। तत्रैवोपचारनिर्णयश्च—"गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च। पञ्चोपचारा एते स्युर्दीपान्तं वाऽपि सम्मतम्" इति। तस्मात्पूजाङ्गं न स्नानम्। शुद्ध्यर्थमेकादशोऽयं संस्कार इत्यर्थात्सिद्धम्।

---

१. उपचारैस्तु पूजयेत् इति मातृकापाठः।

संस्कारानन्तरं स्नानस्य श्रवणादुपचारेषु[1] गृहीतत्वाच्च । तस्माद्गन्धादिनिवेदनकाले चलितस्यैव लिङ्गस्याघोरशतजपः कर्तव्यः । न स्नानकाले । स्नानस्याधिकरणानुरूपं कर्तव्यत्वात् । स्नानस्य पूजायां नियमो न । तथा कामिके—"स्नानयोग्यास्स्नापनीयाश्चित्राद्यास्तद्विवर्जिताः । कृपाणदर्पणादौ वा मणौ वा प्रतिबिम्बिते" ॥ इति ।

दक्षिणद्वारार्चनापटले—

रत्नजे लोहजे पक्वमृण्मये बेरशोधनम् ।
अभीष्टदिवसे कुर्याद्यावद्बेरं सधूसरम् ॥
वस्त्रसम्मार्जनं पुण्यदिवसे स्नपनं मतम् ।
कर्मार्चायामथान्येषां मणिलिङ्गेऽथ पीठके ॥
अथवा बाणलिङ्गे वा दर्पणादौ समर्चयेत् । इति ।

तत्र देव्यर्चनपटले—

बेरं चेल्लोहजं कुर्यात्स्नानं पर्वणि पर्वणि ।
सुधाचित्रादिकं चेत्तु कर्मार्चाशुद्धिरिष्यते ॥
अथवाऽस्त्राणुना लब्धतालवृन्तजवायुना ।
अथवोपलमूर्तिश्चेत्क्षाळनं तत्र कीर्त्यते ॥ इति ।

तस्मादुपलमूर्तीनामेव प्रत्यहं स्नानाख्यसंस्कारः कर्तव्यः । अन्येषामकर्तव्यत्वात् न पूजाङ्गं स्नानम् । तस्माद्गन्धादिनिवेदनकाले चलितस्य लिङ्गस्य शताघोरजपः कर्तव्यः । नान्येषाम् । तथा चलाऽऽत्मार्थपद्धतिकृता सोमशम्भुनाऽपि संस्कारानन्तरमेव हि विशेषस्नपनं विहितम् । "अभ्यज्योद्वर्त्य निर्मृच्य राजिकायवजादिभिः[2] । अर्घ्योदबिन्दुपुष्पाद्यैर्गण्डुकैः स्नापयेच्छनैः" ॥ इत्यादि । तथा कामिके—

---

१. उपचारेष्वगृहीतत्वाच इति चेद्दूरम् । २. लवणादिभिः इति मातृकापाठः ॥

लिङ्गशुद्धिः क्रमात्प्राप्ता यथावदभिधीयते ।
लिङ्गं त्रिविधमाख्यातं व्यक्ताव्यक्तोभयात्मकम् ॥
स्वयम्भुबाणदेवार्षमानवाद्यमनेकधा ।
स्थिरलिङ्गं चलं वाऽथ मण्डलं[1] स्थण्डिलं तथा ॥
पटं वा भित्तिचित्रं वा पीठं वा मन्त्रसंस्कृतम् ।
आवाह्य[2] गुरुपीठाद्यं विद्यापीठमथापि वा ॥
विशेषतस्स्वयं सिद्धं सूर्यमण्डलमेव[3] वा ।
अन्यद्वा लिङ्गकल्पोक्तं सैकताद्यं विशेषतः ॥
एतत्सर्वं शिवेज्यार्थं यथायोगं प्रकल्पयेत् । इति ।

संस्कारदशकानन्तरं तत्र—'स्नानयोग्यास्स्नापनीयाश्चित्राद्यास्तद्विवर्जिताः' । इति । अत्र चित्रशब्देन रजोविरचितमण्डलमुच्यते । तस्मात्पूर्वोक्तमण्डलस्थण्डिलपटभित्तिचित्रगुरुपीठविद्यापीठसैकतसूर्यमण्डलादीनि चित्राद्याः । स्वयम्भुबाणदैवार्षमानवस्थिरलिङ्गानि च चरलिङ्गानि स्नानयोग्या इत्यर्थः । तत्र विसर्जनसमये "चललिङ्गेऽपि सापेक्षोऽनपेक्षस्स्थण्डिले सदा' । इति चललिङ्गस्य संस्कारानन्तरं चलत्वमुक्तम् । किञ्च तत्रैव देवीप्रतिष्ठापटले—

कशिलां पूर्वमन्त्रेण रत्नौषध्यादिगर्भिताम्[4] ।
प्राग्वद्धाम्नीश्वरीं नीत्वा मूलमुच्चार्य विन्यसेत् ॥
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं च कारयेत् ।
चलं चेत्स्नानवेद्यां तु मन्त्रन्यासं समाचरेत् ॥
देव्यग्रे तु घटं[5] न्यस्य कुम्भाद्बीजं हृदि न्यसेत् ।
विन्यसेदन्यकुम्भेभ्यः पीठस्य परितो मनून् ॥

---

१. त्रिविधं मण्डलं तथा इति मुद्रितकामिकपाठः । २. वह्नयम्बुगुरुवृक्षाद्यम् इति मुद्रितकामिकपाठः । ३. पाषाणं रत्नमेव वा इति मुद्रितकामिकपाठः । ४. रत्नहेमादिगर्भितामिति मुद्रितकामिकपाठः । ५. घटान् इति मुद्रितकामिकपाठः ।

तत्वमूर्त्यादिविन्यासं पूर्ववत्कारयेत्ततः ।
तत्तत्कुम्भोदकैश्चैव तत्तद्देशेऽभिषेचयेत् ॥
स्नपनं कारयेदन्ते नैवेद्यं चोत्सवं गुरुः । इति ।

तथा तत्रैव चण्डेशस्थापनपटले—

स्नपनं भूरि नैवेद्यमुत्सवं तु चलं नयेत् इति ।

तथा विघ्नेशस्थापनपटले—

कशिलां पूर्वमन्त्रेण रत्नौषध्यादिगर्भिताम् ।
अथ ब्रह्मशिलोपेतं स्थापयेद्वा[1] गणाधिपम् ॥
प्राग्विन्यस्य गणेशानं मूलमन्त्रं समुच्चरन् ।
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समाचरेत् ॥
चलं चेत्स्नानवेद्यां तु मन्त्रन्यासो भवेद्द्विजाः । इति ।

तत्र कल्याणमूर्तिप्रतिष्ठापटले—

सम्पूज्य स्नपनं कुर्यादर्चनोक्तवदर्चयेत् ।
दत्वा नैवेद्यमन्ते तु प्रतिष्ठोत्सवमाचरेत्[2] ॥ इति ।

तत्र कालकामान्तकप्रतिष्ठापटले—

अनुक्तमत्र सामान्यस्थापनोक्तवदाचरेत् । इति ।

तत्र लिङ्गप्रतिष्ठान्ते—

'लिङ्गप्रतिष्ठा[3] चाख्याता ज्ञेया सामान्यरूपिणी' इत्युक्तत्वाचेषु पटलेषु क्रियामिश्रितत्वात्तत्पटलार्थान् साध्ववगम्य चलबेरस्थापनं कर्तव्यम् । तत्र क्रमः—चलानां बेराणां मन्त्रन्यासकाले स्नानमण्टपे स्नानवेद्यामाधारशक्त्यादि सम्पूज्य तस्यां चलबेरं शयनादुद्धृत्य तन्मूलेन प्रतिष्ठाप्य पुण्याहं वाचयित्वा शिल्प्यादिस्पर्शशुद्ध्यर्थं शान्तिकुम्भजलेनाभिषिच्य षडध्वन्यासं

---

१ स्थापयेच्च इति मुद्रितकामिकपाठः । २. प्रतिष्ठावत्समाचरेत् इत्यपि पाठः । ३. शिवलिङ्गप्रतिष्ठैषा प्रोक्ता सामान्यरूपिणी इति मुद्रितकामिकपाठः ।

च धर्मादिशक्तिमण्डलशिवासनान्तं पीठे विन्यस्य मूर्तिदण्डभङ्गिकलाभाङ्गिक्रमेणेशानादीन् विन्यस्य विद्यादेहं नेत्रं विन्यस्य पीठे क्रियां लिङ्गे ज्ञानशक्तिं च विन्यस्य प्रतिमाग्रकल्पितस्थण्डिले वेदिकास्थकुम्भप्रधानकुम्भपूर्वाद्यष्टकुम्भांश्चोद्धृत्य स्थण्डिले स्वस्वदेशे संस्थाप्य सुमुहूर्ते प्रधानकुम्भाणुं प्रतिमामूर्ध्नि आवाहनक्रमेण विन्यस्य पूर्वाद्यष्टकुम्भाणुं पीठपूर्वादिषु विन्यस्य स्थापनादिसंस्कारनवकं कृत्वा मन्त्रन्यासवत्कुम्भान् स्वस्वदेशेऽभिषिच्य पञ्चगव्यपञ्चामृतसहस्रकलशादिभिस्संस्नाप्य वाससा विरूक्ष्य स्नानमण्टपान्महामण्टपं प्रतिमामानीय पीठे संस्थाप्य गन्धादिभिरभ्यर्च्य अर्चनापटलोक्तक्रमेण पञ्चोपचारैस्सावरणमभ्यर्च्य नैवेद्यधूपदीपादिजपस्तोत्रप्रदक्षिणनमस्कारपर्यन्तं कृत्वा गीतनृत्तादिभिस्सन्तोष्य ग्रामप्रदक्षिणं कारयित्वा आलयं प्रविश्य पाद्यादिभिरुपचारैस्सावरणमभ्यर्च्य नैवेद्यधूपदीपादिभिः पूजयेत्[1]। इति चलानां पूजामध्ये चलनं कामिके विहितम्।

किञ्च कामिके बाणलिङ्गप्रतिष्ठापटले—"चलं च द्विविधं प्रोक्तमङ्गं प्राधानिकं त्विति। चित्रादिप्रतिमादीनां पूजार्थं तत्तदग्रके। पूजितं चाङ्गमित्युक्तमन्यत्प्राधानिकं मतं" इति। चललिङ्गानां चित्रादिपूजानियुक्तानां कर्मार्चाप्रतिमानां च दशसंस्कारानन्तरं चलनं च स्नानार्थं विहितम्। कारणे—"आत्मार्थं च परार्थं च पूजा द्विविधमुच्यते। दत्ते च गुरुणा लिङ्गे[2] स्थण्डिले स्वयमात्मनि। क्षणिके मण्डले तोयेप्यात्मार्थयजनं स्मृतम्" इति। तत्र आवाहनानन्तरं 'जलेन स्नापयेत्पश्चाद्दधिक्षीरघृतैस्तथा'। इति। तत्र विसर्जनसमये—'चलाचलेषु सापेक्षोऽनपेक्षस्स्थण्डिलादिषु' इति। तत्र पूजापटलान्ते—"एवं यः कुरुते मर्त्य आत्मार्थं च परार्थकम्। कुलैकविंशमुद्धृत्य शिवलोके महीयते" इति। तत्र सकळार्चनापटले—"संशोध्य मृण्मयं बिम्बं वस्त्रपूतेन वारिणा।

---

१. सावरणमभ्यर्च्य नैवेद्यधूपदीपादिभिः इत्येतानि पदानि मातृकान्तरे न विद्यन्ते। २. लिङ्गं इति मुद्रितकारणागमपाठः।

कुशैर्वा शोधयेद्धीमान् चित्राभासादिमेव च । तथा वर्णितशैलं च केवलं शैलजं जलैः । रात्रिचूर्णेन सौवर्णं राजतं लवणादिभिः । ताम्रमम्लेन शुद्धं स्यादस्त्रमन्त्रेण सुव्रत । अथ लोहजबिम्बानां स्नानं पर्वाणि पर्वाणि'' इति । तत्र लिङ्गशुध्यवसरे—

कर्मार्चा या कृता तत्र कर्मार्चायां समारभेत् ।
पाद्यमाचमनं चार्घ्यं हृदयेन प्रदापयेत् ।
पञ्चब्रह्मषडङ्गैश्च के कुर्यादभिषेचनम् । इति ॥

कारणेऽपि चलानां दशसंस्कारानन्तरं सहस्रकलशाद्यभिषेको विहितः । किञ्च—'आवाहनासनं पद्ममनन्तं स्नानकर्मणि । विमलं चार्चने विद्यान्नैवेद्ये योगमासनम् । वस्त्राणि चान्यकर्माणि सिंहपीठे तथा भवेत्' । इति कामिके । तत्र पश्चिमास्यार्चनापटले—'अनन्ताधारशक्तिभ्यां भवेदानन्तमासनम् । धर्माधर्मादिभिर्वर्गैः छदनाभ्यां समन्वितैः । सिंहासनमिदं प्रोक्तं योगं मायाब्जमुच्यते । पद्मं वैद्येश्वरं पद्ममण्डलं विमलासनम्'' इति । कारणे—'भूतरूपेषु कोणेषु पादाः कृतयुगादयः । अव्यक्तो नियतिः कालः कलाचेति चतुष्टयम् । प्रागादिष्वळिकाः प्रोक्ता मध्यपादस्तु केशवः । एवं योगासनं प्रोक्तं पद्मासनं ततोपरि' । इत्युक्तत्वात् सिंहासनयोगासनविमलासनानामाभरणकालनैवेद्यकालार्चनाकालेषु विहितत्वात् सिंहासनादियुक्तानां चलानां दशसंस्कारानन्तरं चलासनं प्रोक्तमित्येकः पक्षः । केषांचित् 'पञ्चासनात्मकं ह्येतदेकासनमुदीरितम् । स्नानावाहनकालादौ पृथगेतान् प्रकल्पयेत्' । इति कामिकश्रुत्या पश्चिमद्वारार्चनस्य[3] तावत्स्थिरलिङ्गपरत्वात् तत्र पृथगासनपक्षस्याप्युक्तत्वादुभयपक्षोऽपि

१. तथाविधाऽऽसनपूजायुक्तानाम् इत्यपि पाठः । २. दशसंस्कारानन्तरं चलनं चोक्तम् । सिंहयोगविमलासनपूजाविरहितानां दशसंस्कारानन्तरं चलनं प्राप्तम् इत्येकः पक्षः इत्यपि पाठः ॥ ३. द्वारार्चनं तावत् इति मातृकापाठः ॥

स्थिरलिङ्गानां सम्मतम् । पूजापटलेऽपि पृथगासनपक्षस्याप्युक्तत्वात् तत्र चलानामचलानां च पूजायाश्चोक्तत्वात् चलानां पृथगासनपक्षः स्थिराणां पृथगासनपक्षश्चेति विशेषश्रुत्यभावात् आसनादिस्तोत्रान्तोपचारपूजितबेराणामुत्सवादौ ग्रामप्रदक्षिणं विधाय स्नानमण्टपे निवेश्य परिवेषक्रमं कृत्वा पाद्याद्यैस्सम्पूज्य सापेक्षं विसृज्य पुनस्सन्ध्याद्वितीयसन्ध्यार्चनादिविधानस्योक्तत्वात् । ग्रामप्रदक्षिणकालेऽपि—"रथादौ शिबिकादौ वा परिचारकमूर्धसु । यानकाले तु ताम्बूलं देयं नानाफलानि च । भक्ष्यापूपादिकं देयं दत्वा काण्डपटादिकम् । शङ्खध्वनिसमायुक्तं पाद्याचमनसंयुतम् । प्रच्छन्नपटमावर्ज्य निर्माल्यापनये कृते । दत्वोपहारान् सर्वेभ्यो मद्भक्तेभ्यः क्रमेण तु । आगन्तुकेभ्यस्त्वन्येभ्यस्तत्तद्भक्त्यनुसारतः । प्रवेश्य धाम कूटाद्यम्" इति कामिके महोत्सवविधिपटले श्रुत्या नैवेद्यदानश्रवणयोगात्तदथो योगासनपूजाकर्तव्यत्वात् अनन्तरमपि चलनविधानाच्च चलानां पञ्चासनपूजानन्तरं दशसंस्कारानापाद्य पञ्चगव्यादिस्नपनं कर्तव्यम् इति साधूक्तम् । किंच 'गणेशं पीठवायव्यां गन्धपुष्पादिभिर्यजेत् । ऐशान्यां गुरुपङ्क्तीश्च पूजयेद्धृदयेन तु' । इति कामिकश्रवणात्पिण्डिकोर्ध्वे वायव्यामैशान्यां गणेशश्च गुरवश्च पूज्याः । तेषां स्नानकाले निर्माल्याद्युपप्लवः । तस्मान्महास्नानानन्तरम्[1] आसनार्चा कर्तव्येति केचित् । पीठस्य वायव्यामिति व्युत्पत्त्या गर्भगृहवायव्येशानयोस्स्थिराणां चलानां भद्रपीठवायव्ये पूजा कार्या । तस्माद्गणपतिगुर्वोः पीठत्वाभावात् पीठपूजा नेति शास्त्रयुक्तिः । वेदिकाया दिक्षु उत्सवादियागेषु मण्टपवीथीशयोर्गणपतिगुर्वर्चनं विहितम् । तदनन्तरं स्नानवेद्यां पञ्चासनदशसंस्काराभिषेकान्निर्वर्त्य भद्रपीठे देवं निवेश्य गन्धादिभिरर्चयेदिति क्रमः । अलमनया चललिङ्गचलनदोषाध्यारोपणसाधुजनप्रतारणया इति । सिद्धान्तरत्नाकरे गुरु-

---

१. स्नपनानन्तरमिति पाठभेदः ॥

भिरप्युक्तम् । एवंविधैर्वाक्यैश्चललिङ्गानां दशसंस्कारानन्तरं स्नानार्थं चलनदोषो नास्ति । अलमलमतिप्रसङ्गेन । **शुभमयैर्गन्धैस्समालेपनं** भोगमोक्षस्वरूपं मङ्गळं शुभम् । तन्मयैर्मङ्गळस्वरूपैरालेपनम् । सद्वस्त्रं च समस्ताभरणं च **सद्वस्त्राभरणम्** । जीर्णोपर्युक्तरहितम्[1] । सद्वस्त्रस्याहतत्वम् आभरणादीनां च । सुगन्धिकुसुमैः **मालाभिः** मल्लिकाद्यैर्विरचितमालाभिः । माल्यैरनेकधा । तच्च फलभेदेन । तत्र शुक्लं मोक्षदम् । रक्तं भोगदम् । पीतं सात्विकं भोगमोक्षदम् । कृष्णमयं भोगदम् । श्यामं मोक्षदं भोगदम् । पञ्चवर्णमिश्रं सर्वसिद्धिदम् । किञ्चोत्तमसिद्ध्यर्थं श्वेतम् । मध्यमसिद्ध्यर्थं रक्तम् । अधमसिद्ध्यर्थं कृष्णम् । उत्तममध्यमयोः पीतम् । मध्यमाधमयोश्श्यामम् । मिश्रं सर्वसिद्धिदम् । उत्तमादिभोगाश्शुद्धाशुद्धमिश्राश्शुद्धाध्वस्थास्सर्वसिद्धयश्च । सिद्धयो द्विविधाः । दृष्टादृष्टभेदेन । उभयमपि परापरभेदेन द्विविधम् । तथाचोक्तं कामिके—

काम्यादिसिद्धयो ज्ञेयास्सिद्धयो बहुधा स्मृताः ।
कन्यसं मध्यमं ज्येष्ठं श्रेष्ठं चेति चतुर्विधम् ॥
प्रत्येकं त्रिविधं प्रोक्तमुत्तमादिविभेदतः ।
फलं दृष्टमदृष्टं च द्विविधं तत्परापरम् ॥
कन्यसं भूपतीशत्वं मध्यमं बलसिद्धयः ।
उत्तमं खेचरत्वं च श्रेष्ठं देवसमानता ॥
भिद्यते बहुधैकैकं विद्येशत्वादिभेदतः ।
विद्येशत्वं च रुद्रत्वं ब्रह्मत्वं वैष्णवं पदम् ॥
इत्येवमादि देवत्वं श्रेष्ठमित्युच्यते बुधैः ।
सिद्धयश्चाणिमाद्याश्च चक्रवर्तित्वमेव च ॥

---

१. जीर्णोपयोगरहितम् इति मातृकापाठः ॥

इत्येवमादिकं श्रेष्ठं सिद्धीनां मुनिपुङ्गवाः ।
गुळिकाञ्जनपाताळखड्गघण्टादि मध्यमम् ॥
अपमृत्युजयोच्चाटवश्याद्यमधमं मतम् ।
दृष्टमेतदनेनैव यद्देहेनोपभुज्यते ॥
देहान्तरेण वा दृष्टं मायाकार्ये परत्र च ।
मायाकार्येऽमरेशादिरुद्रस्थाने च यत्सुखम् ॥
अपरं तत्परं विद्यादनन्तादिपदस्थितिः । इति ॥

शिवतन्त्ररहस्यसारे—"पुष्पाणि सात्त्विकानीह शुक्लवर्णानि यानि वै। राजसानि च रक्तानि तामसान्यसितानि च । श्यामं तमोरजोमिश्रं पीतं राजससात्त्विकम्" इति । कारणे—"मोक्षदं सात्त्विकं ज्ञेयमृद्धिदं राजसं तथा । मिश्रं तद्द्वयसिद्ध्यर्थं पुत्रपौत्रविवृद्धिदम्"॥ इत्युक्तत्वाच्च । सालङ्कारसदाशिवस्य कुण्डलादिभिरलङ्कृतसदाशिवस्य । विधिवत् समन्त्रकम् । यद्वाऽर्चनाङ्गोक्तक्रमेणोत्तमादिद्रव्यभेदद्रव्यमानादिकयुक्तं च गन्धादीनां विधिः। एवमर्चनं अणोर्भोगार्थं सदेशधाम्नि शुद्धविद्याभुवने । अयमभिप्रायः। अर्चनाङ्गपटले—गन्धादिधूपदीपपाद्याचमनार्घ्याणां द्रव्यभेदेन धूपदीपादिपात्राणां वस्त्रादीनां च मानभेदेन गन्धपुष्पादीनां वर्णभेदेन पञ्चगव्यामृतादीनां सितरक्तादिगवोत्पत्तिभेदेन यागमण्टपस्नानजलादीनां वाराणस्यादिदेशभेदेन चलाचलादिलिङ्गभेदेन । बाह्याभ्यन्तरकालभेदेन बीजपदादिमन्त्रभेदेन तेषां नमस्कारादिजातिभेदेन ह्रस्वाद्युच्चारभेदेन इत्येवमादिभेदैरुत्तममध्यमाधमविधानात् । तदुक्तं—"द्रव्यमानवर्णोत्पत्तिदेशमन्त्रक्रियादिभिः" इति। अत्रोक्तैरुत्तमभुवनेषु उत्तमभोगान् साधकाः प्राप्नुवन्तीति तात्पर्यम् । धूपप्रदानं विमलं दीपं च शिवज्ञानदं ज्ञानशब्देन ज्ञानक्रिये विवक्षिते । तदुक्तं पौष्करे—'एवं ज्ञातृत्वकर्तृत्वे ज्ञानरूपे इति स्थिते' । इति । तस्माद्धूपव्याजेन क्रियाशक्त्या दीपव्याजेन ज्ञानशक्त्याऽणुर्युक्तो

---

१. पुष्पं पत्रं च वृद्धिदम् इत्यपि पाठः ।

भवति। तथा श्रीमत्त्रयोदशशतिके—“बिन्दुनादादिभिर्विश्वं यथा व्याप्रियते तथा। क्रियाशक्तिस्सैव शैवी धूपव्याजेन भाव्यते। ज्ञानशक्तिस्स्वानिष्ठा या सर्वज्येष्ठस्वरूपिणी॥ शिवेन समवेता च सैव दीपेन चिन्त्यते” ॥४०॥

शुचीशरक्तपानिलेन्द्रमृत्युकेन्दुसंस्थितान्
पयोधरार्कवातवह्निसन्निभानिनेक्षणान् ।
युगाननान् वराभयत्रिशूलशक्तियुकरान्
नमश्शिवाङ्गसम्भवान् हृदादिमन्त्रविग्रहान् ॥ ४१ ॥

शुचीति। शुचिः अग्निः। ईशः ईशानः। रक्तपः राक्षसः। अनिलो वायुः। इन्द्रः शक्रः। मृत्युर्यमः। कं जलम्। तेन वरुणः। इन्दुः सोमः। एषां दिक्षु स्थितान्। पयो जलम्। धरा भूमिः। अर्कः सूर्यः। वातो वायुः। वह्निः अग्निः। एषां वर्णैनेत्यध्याहारः। एतेषां वर्णास्सितपीतरक्तकृष्णरक्ताः। तैः सन्निभाः सदृशवर्णाः तान् इनेक्षणान् इनास्सूर्याः द्वादशाक्षा इत्यर्थः। युगाननान् चतुर्वक्त्रान् वरदाभयत्रिशूलशक्तियुक्तकरान्। शिवाङ्गसम्भवान् शिवस्य हृदयाद्यङ्गजातान्। यद्वा शिवाङ्गवत्स्वकीयाङ्गस्य येषामङ्गसम्भवस्ते शिवाङ्गसम्भवा इति व्युत्पत्त्या शिवदेहजवर्णमुखायुधान्येवैषां वर्णमुखायुधानीति हृदयादीनां सद्यपुरुषवामाघोरवामवक्त्रवर्णाः। ईशानस्य निष्कळत्वात्तस्य यथार्थतोऽङ्गत्वं न। भोगाङ्गपूजायास्सकळविषयत्वात्सकळैश्चतुर्भिर्मुखैः पुरुषाद्यैश्चतुर्वक्त्रत्वमस्त्येव। यदि सितरूपत्वं हृदयस्य वक्त्रचतुष्टये सितरूपत्वं कथं घटते। घटत एव। द्वारानुकूलसद्यस्य पश्चिमोदक्प्राग्दक्षिणेषु स्थितिश्रवणात्सद्यरूपस्य हृदयस्यापि चतुर्वक्त्रं सितमेव। पुरुषवर्णशिरसोऽपि तथा चतुर्वक्त्रं पीतमेव। एवं शिखाकवचास्त्राणाम्। शिवस्य दक्षपार्श्वायुधान्येव शक्त्यभीशूलवरदाः। तस्माच्छिवेन सञ्जातमङ्गत्वं हृद-

---

१. स्वन्येष्वष्टस्वरूपिणी इत्यपि पाठः॥ २. विद्यते इत्यपि पाठः॥

यादीनाम् । अत्र इन्द्रादिदिक्स्थितिरप्यस्त्रस्यैव । चतुर्दिक्ष्वस्त्रमर्चयेत् इति वचनात् ॥ ४१ ॥

भोगाङ्गार्चनमात्मनश्शिवगुणप्राप्त्यर्थमैक्यं प्रभो·
रङ्गानां पुनरर्चकस्य शिवसंयोगाय शुद्धात्मनः ।
तृप्तस्यान्ननिवेदनाम्बुमुखवासादिप्रदानं मन-
स्तृप्त्यर्थं शिवभावमङ्गलकरं चित्रं तवार्चाफलम् ॥ ४२ ॥

भोगाङ्गेति ॥ "सर्वज्ञतादिशक्तीनां सतीनामात्मनि प्रभोः । उन्मज्जनं भावयामि षडङ्गविधियोगतः" ॥ इति वचनाद्भोगाङ्गार्चनं आत्मनः स्वस्य शिवगुणप्राप्तिनिमित्तम् । प्रभोरङ्गानां ऐक्यं शिवेन सहैकमिति भावना शुद्धात्मनः त्रिमलरहितस्यार्चकस्य । शिवसंयोगाय शिवसायुज्यार्थम् । तृप्तस्य स्वभावतः परितृप्तस्य परमेश्वरस्य अन्ननिवेदनाम्बुमुखवासादिप्रदानं निवेदनयोग्यम् । तेन लड्डुकापूपकदळीफलपायसघृतशर्कराशुद्धोदनादयश्चान्नम् । सुरभिसुगन्धिशिशिरपानीयम् । मुखवासादिप्रदानं मुखं वासयति परिमलीकरोतीति मुखवासः । एलालवङ्गकर्पूरतिम्बुजातिफलतक्कोलकस्तूरीणां हिमाम्भसा पिष्टानां गुळिकीकृतानां मुखवास इति नाम । आदिशब्देनाऽऽरात्रिकदर्पणच्छत्रचामरसितवासस्तालवृन्तानि । एषां शम्भोः प्रदानं स्वभावतृप्तस्य शिवस्य तृप्त्यभावात्स्वमनस्तृप्त्यर्थमेव । किञ्च आरात्रिकाद्यं शिवभावमङ्गळकरं भावो लीला क्रियाचेष्टाभूत्यभिप्रायजन्तुषु इत्यमरः । शिवतत्वरूपं मङ्गळकरम् । तदुक्तं त्रयोदशशतिकालोत्तरे—

बिन्दोश्शिवाधिष्ठितस्य शुद्धाशुद्धाध्वनो भ्रमात् ।
व्यापकं चिन्त्यते येन नीराजनमितीष्यते ॥ इति ॥

येन पुरुषेण शिवाधिष्ठितस्य बिन्दोर्निवृत्त्यादिकलारूपस्याऽऽरात्रि-

कस्य पञ्चप्रदीपाढ्यस्याधोभ्रमादशुद्धाध्वसूर्ध्वभ्रमात् शुद्धाध्वसु यद्व्यापकं चिन्त्यते तन्नीराजनमित्यभिधीयते । इति । व्यापित्वमारात्रिकेण । तस्मिन् भस्म-शिवोपरि त्रिधा भ्राम्य निक्षिपेत् । तद्विघ्ननिवारणम् । 'गृहीत्वा भस्महस्तेन भ्रामयित्वा शिवोपरि । त्रिवारं दीपमध्येतु निक्षिपेत्तदनन्तरम् ॥ पूजाप्रति-भटानां तु राक्षसानां निवारणम् । यत्तद्विभाव्यते पुत्र कल्पसिद्धेन भस्मना" ॥ इति । इच्छाशक्त्या विश्वोत्पत्तिनिमित्तं सविकल्पकभावना या सा दर्पणम् । शुद्धविद्याकलारागादिभिर्व्यक्तज्ञानक्रियेच्छाशक्तेः पुंसश्शिवस्ये-च्छाज्ञानक्रियाभिस्सह सन्धानं संयोजनं सायुज्यार्थं चामरम् । एवं सितवासस्तालवृन्तानि । तथा त्रयोदशशतिके—

इच्छाशक्तौ निर्मलायां विश्वस्योत्पत्तिहेतुतः ।
प्रतिबिम्बालोकनं यत्तदादर्शेन बुध्यते ॥
शुद्धविद्यामयीनां तु स्ववृत्तीनां परे शिवे ।
सन्धानं भाव्यते येन तच्चामरमितीष्यते ॥
पञ्चतत्वात्मिकायास्तु स्ववृत्तेश्शिवयोजनम् ।
एकरूपतया यत्तद्भाव्यते सितवाससा ॥
कलाविद्यादिजन्यानां स्ववृत्तीनां शिवार्पणम् ।
तिर्यग्विभाव्यते येन ताळवृन्तं तदीरितम् ॥
सर्वोपचारसंयुक्त्यै महामुद्रा प्रदृश्यते ॥ इति ।

तवार्चाफलं चित्रं अत्याश्चर्यम् । ब्रह्मादिदेवतान्तरार्चनं जड-रूपतनुकरणभुवनभोगप्रदम् । तदात्मनि आत्मतत्वप्रतिपत्तिकरम् । अनित्यं च । भवदर्चनं मुक्तवासनाभिश्शुद्धनित्यमुक्तपरव्याप्तपरिपूर्णस्वतन्त्रसर्वो-त्तीर्णसर्वविषययन्तृत्वसर्वकर्तृत्वरूपशक्तानां स्वकीयज्ञानक्रियेच्छात्मनामङ्ग-व्याप्तिकारकं यतस्तत एवंविधायास्सिद्धेरन्यसमयेषु किञ्चिन्मात्रमप्यश्रुतत्वा-दत्याश्चर्यमित्याशयः ॥ ४२ ॥

---

१. मनुजरूप इति पाठभेदः । २. कारणमिति पाठभेदः ॥

पवित्रभूतस्य पवित्रदानं
तापत्रयघ्नं सकलार्थसिद्ध्यै ।
जपश्च भक्त्या प्रणतिश्शिवस्य
ब्रह्मेन्द्रविष्ण्वादिपदत्वहेतुः ॥ ४२ ॥

पवित्रेति ॥ **पवित्रभूतस्य** शुद्धभूतस्य । यद्वा पवित्राणि ब्रह्माणि ईशानादिब्रह्मभूतस्य **पवित्रदानं** । तत् द्विधा, नित्यं नैमित्तिकं चेति । आद्यं पत्रपुष्पकुशाक्षतरूपं सर्वतत्वमयं पवित्रम् । अन्यन्मिथुनशुक्लचतुर्दश्यादि-तुलाशुक्लाष्टमीपर्यन्तेषु मेषादिषड्राशिषु एकस्मिन्राशौ शुक्लप्रतिपद्युक्ते दर्श-द्वयराशिरूपाधिकमासरहितेषु च अधिमासमेषादिषट्के अधिकमासयुक्त-संवत्सरेषु कर्कटकशुक्लचतुर्दश्यादिवृश्चिकशुक्लाष्टमीपर्यन्तेषु शुक्लकृष्णपक्ष-स्थचतुर्दशीषट्केषु अष्टमीषट्केषु मुमुक्षुभिर्बुभुक्षुभिश्च साधकैर्गृहस्थैश्च कृष्णपक्षमलमासरहिततिथिषु कन्यायामघोरायुतजपपूर्वं तुलावृश्चिकवर्ज्यं मुमुक्षुगृहस्थस्य कन्यातुलावृश्चिकेष्वघोरायुतजपपूर्वं विष्णुस्वापनिमित्तत्वा-न्नैमित्तिकवाच्यं च नित्यविधिपूरणत्वान्नित्याङ्गवाच्यं च विशेषशिवयाग-पुरस्सरं सव्रताङ्गं सनियमं गन्धपवित्रकं कङ्कणत्रयं गङ्गावतारयुक्तं यत्पवि-त्रमीश्वरस्य सिद्धिनिमित्तं स्वर्णमाणिक्यसूत्रपट्टादिभिः मुक्त्यर्थं कुशादिभिरु-भयार्थं कार्पाससूत्रैरारोप्यते तन्नैमित्तिकम् । तत्र कङ्कणत्रयं शिवतत्वादि-क्रमात् । मनोवाक्कायजनितपतनरूपं तापं हन्तीति **तापत्रयघ्नम्** । "गां गता या पराशक्तिस्सैव गङ्गावतारकम्" इत्युक्तत्वात्पराशक्तिस्वरूपग-ङ्गावतारारोपणम् । **सकलार्थसिद्ध्यै** सकला अर्थाः तेषां सिद्ध्यै । अर्थः प्रयोजनमिति कृत्यपञ्चकम् । अभिव्यक्तदृक्क्रिययोः प्रयोजनं सर्वज्ञत्वं सर्वकर्तृत्वं च । तत्र कर्तृत्वं पञ्चधा सृष्ट्यादिभेदेन । शैवशास्त्रे पञ्चकृत्य-कारिकाशक्तिक्रियाशक्त्यभिव्यक्तेरेव मुक्तित्वाद्गङ्गावतारारोपणं शिवसायु-ज्यार्थम् । सर्वतत्वमयत्वाच्च । तदुक्तं कामिके—"प्रत्यहं वाङ्मनः काय-

---

१. अस्वर इत्यशुद्धतया मातृकापाठः कश्चित् । २. सर्वतत्वमलक्षयत्वात् इति पाठभेदः ॥

व्यापारजनितादलम् । पतनात्त्रायते यस्मात्तस्मादेयं पवित्रकम्" ॥ इति । क्रियाकाण्डशेखरे—"प्रत्यहं वाङ्मनःकायजातदोषनिबर्हणम् । शिवविद्यात्मतत्वेन स्वाहान्तेनाऽऽदिनाऽणुना ॥ दद्याच्छिवाय साङ्गाय शिवसायुज्यहेतवे" ॥ इति । जपश्च शिवस्य भक्त्या प्रणतिश्च ब्रह्मेन्द्रविष्ण्वादिपदत्वहेतुः । 'पूजया विपुलं राज्यमग्निकार्येण सम्पदम् । जपेन पापसंशुद्धिं ध्यानेन ज्ञानमश्नुते' ॥ इत्युक्तत्वाज्जपः पापक्षयार्थः पापो मलः । तदुक्तं—'पशुत्वपशुनीहारमृत्युमूर्च्छामलाञ्जनैः । अविद्यावृतिरुग्ग्लानिपापमूलक्षयादिभिः ॥ पर्यायैर्बहुभिः प्रोक्तस्तमोमोहार्णवैर्मलः' । इति ॥ शिवतन्त्ररहस्यसारे—'शिवस्य मन्त्रनाथस्य चान्तर्बाह्योत्थितस्य च । यदैक्यं स जपः ख्यातो लक्षसंख्यादिको मतः' । इति । ऐक्यं जले जलवद्यस्माज्जपस्य सायुज्यप्रदत्वात् सकलार्थसिद्ध्यै प्रणतिः ब्रह्मविष्ण्वन्द्रादिपदत्वहेतुः । "सव्यं भोगप्रदं विद्यादपसव्यं तु मोक्षदम्" इति कामिकश्रुत्या प्रदक्षिणस्य च "पशोः पशुपतेरग्रे दण्डवत्पततो भुवि । पतन्ति पातकास्सर्वे नोत्तिष्ठन्ति पुनस्सह" ॥ इति पुराणश्रुत्या च नमस्कृतेः पातकनाशकत्वाद्ब्रह्मादिपदत्वहेतुः ॥ ४३ ॥

अर्चने सकळं जपे सकळाकळं सततोदितं
निष्कळं सकळाध्वगं परिपूर्णमात्मसमर्पणे ।
व्योम्नि सुस्फटिकप्रभं भवने कलासहितं हरं
यो हि वेत्ति परं शिवं शिव एव सोऽत्र न संशयः ॥४४॥

अर्चन इति । अस्य श्लोकस्य मन्त्रपरा व्याख्या शिवपरा व्याख्येति द्विधा । प्रथमं शिवपरा व्याख्योच्यते । अर्चने अर्चनाकाले । सकळं सकळाध्वगम् । सकळं नाम सकलाध्वस्थजात्यादिज्ञसियुक्तसविकल्पकज्ञानस्वरूपम् । तथाविधाण्वधिष्ठानादिति केचित् । तदयुक्तम् ।

१. सुधीः इत्यपि पाठः ॥

अधिष्ठानसविकल्पकज्ञप्तियुक्ता आत्माधिष्ठानमात्रसविकल्पकज्ञप्तिरीश्वरस्य यदि तस्य सुखदुःखात्मभोगोऽपि भवेत् । तस्मादधिष्ठानसकळत्वं तदयुक्तम् । अधिकारावस्थायां शिवस्य सकळत्वात् 'ईशः प्रवर्तको यस्मात्प्रवृत्तिश्शक्तिभिर्यतः' इति वचनात् जगतस्सृष्ट्यादिषु प्रवृत्तक्रियाशक्तित्वमेव साकल्यमीश्वरस्य । तदा ज्ञानमपि सकळम् । तदुक्तं मृगेन्द्रे— 'सर्वज्ञस्सर्वकर्तृत्वात्साधनाङ्गफलैस्सह । यो यज्जानाति कुरुते स तदेवेति सुस्थितम्' । इति । जपे सकळाकळं भोगावस्थायामुद्योगमात्रत्वाच्छक्तेराधिक्यात्सकळाकळत्वमीश्वरस्य । "इच्छाशक्तौ निर्मलायां विश्वस्योत्पत्तिहेतुतः । प्रतिबिम्बालोकनं यत्तदादर्शेन बुध्यते" ॥ इति त्रयोदशशतिकायाम् । विश्वस्य स्मरणमात्रेण ज्ञानशक्तेस्साकळ्यम् । क्रियाशक्तेः क्रियानिर्वृत्त्यभावादकळत्वम् । तदुक्तम्—'अधिकारे क्रियोद्रिक्ता कार्येष्वधिकृता यतः' । इति । भोगावस्थायामुद्योगमात्रत्वात् ज्ञानशक्तेर्ज्ञानोद्योगत्वात्सकळत्वम् । तथा शिवतन्त्ररहस्यसारे — भोगावस्थायामुद्युक्तमात्रत्वात् तन्मात्रकार्यं कुर्वाणाभिश्शक्तिकलाभिस्सह वर्तमानत्वेन सकळत्वम् । तदानीमधिकारावस्थोपाध्युपहितशक्तिकलानामभावान्निष्कळत्वं चेति सकळनिष्कळः कथ्यते[2]' ॥ इति ॥ **आत्मसमर्पणे परिपूर्णं निष्कळम् ।** आत्मसमर्पणे काले परिपूर्णं व्याप्तं निष्कळम् । ज्ञेयकर्तव्यकार्यभावज्ञानक्रियाशक्त्योः प्रवृत्तिरहितम् । ज्ञेयकर्तव्यासद्भावे ज्ञातुमशक्यत्वात् शक्तवाच्येन्द्रियक्रियाशक्त्योर्व्यापारलयत्वाल्लयावस्था । आत्मनां सकळदेहाभावात्सकळज्ञप्तिशून्यतया निष्कळम् । हरं परमशिवम् । तदुक्तं शिवतन्त्ररहस्यसारे — लयावस्थायां च सर्वासामुपहितशक्तीनामभावान्निष्कळ-

१. भोगावस्थायामित्येतत्प्रभृति वक्ष्यमाण तथा शिवतन्त्ररहस्यसारे इत्येतदन्तवाक्यानि कासुचिन्मातृकासु न सन्ति ॥ २. कथ्यते इत्येतदनन्तरं "सर्वज्ञस्सर्वकर्तृत्वात्" "इच्छाशक्तौ निर्मलायाम्" इत्येतदादिपूर्वोक्तौ द्वौ श्लोकौ मातृकासु विद्येते ॥

मिति । मतङ्गवृत्तावपि—कर्तुश्शक्तयो हि कर्तव्यतिरस्कारे स्वात्मन्यवस्थितत्वाल्लयतत्त्वाभिधानमवस्थाविशेषमुद्दीपयन्त्यो निष्कळादिपदवृत्तावुपाधिभावं प्रतिपद्यन्ते । यदा तु कार्यसम्पादनाय प्रवृत्ता न च तत्प्रयोगभूमिं प्राप्तास्तदा तत्पालनप्रवृत्तत्वाद्भोगतत्त्वाभिधानमवस्थाविशेषमुद्दीपयन्ति । सकळनिष्कळादिपदप्रवृत्तौ कारणतामुपयान्ति । यदा पुनः कार्यप्रयोगदशामनुप्राप्ताः तदाऽधिकारतत्त्वान्तरमवस्थाविशेषं भासयन्त्यस्सकलादिपदवृत्तौ हेतुतां वृजन्ति इति । भेदकल्पनया भेदो न परमार्थतः । यदाहुः—

शक्तोद्युक्तः प्रवृत्तश्च कर्ता त्रिविध इष्यते ।
शक्तेः प्रवृत्तिभेदेन भेदस्तस्योपचारतः ॥ इति पौष्करे ।

लयभोगाधिकाराणां न भेदो वास्तवश्शिवे ।
किन्तु बिन्दोरणूनां च वास्तवा एव ते मताः ॥ इति तत्रैव ।

उपसंहृतकार्यात्मा यदा बिन्दुर्व्यवस्थितः ।
तदा लयाह्वयं तत्त्वं शिवतत्त्वं तदेव हि ॥

तत्र—शक्तोऽयं शक्तयो यस्मादुद्योगादिक्रियाच्युताः ।
शिव एवावतिष्ठन्ते निष्कळश्च स एव तु ॥

तत्र—उद्युक्तस्तु यथा कार्ये बिन्दुर्भोगाह्वयं तदा ।
लभते शिव उद्युक्तस्स एव च सदाशिवः ॥

तत्त्वं तदेव सादाख्यं न शिवाद्वस्तुतो भिदा ।
तत्र—बिन्दुः प्रवृत्तः कार्ये स्यादधिकारस्तदा यदा ॥

शिवस्य न भिदा पूर्वा विशेषस्य मुनीश्वराः ।
ईश्वरश्च स एव स्यात्तत्त्वं तच्चेश्वराह्वयम् ॥

प्रवृत्तोऽयमिति प्रोक्तः प्रवृत्ताश्शक्तयो मताः ।
लयादिभेदः प्रागुक्तो यदुपाधौ शिवस्य तु ॥

स बिन्दुरिति मन्तव्यस्सैव कुण्डलिनी मता । इति ।
यथाऽर्कः पङ्कजं नित्यं बोधसंशोषणादिभिः ।
कर्मभिर्बोधकाद्याख्यां लभतेऽत्र तथा शिवः । इति ।

एवंविधस्य शिवस्य स्वदेहव्यक्तिस्थानमपि निर्दिशति **व्योम्नि** शिखाग्रे द्वादशान्ते ब्रह्मरन्ध्रान्ते वा[1] द्वादशान्ते निष्कळम् । रन्ध्राग्रे सकळाकळम् । सकळनिष्कळस्वभावेनानाहतशिवेनाधिष्ठिताः करन्ध्रमुष्टित्रयान्तावधिकं क्रमादेकत्रिचतुश्चतुरङ्गुलव्यापिन्यश्शतसहस्रकोटिचण्डकिरणमण्डलविषशक्तिव्यापिनीसमनोन्मनाभिधानाश्चतस्रः कलाश्चैवमिति । अत्र कलानामेव रक्तत्वम् । तदधिष्ठातुश्शिवस्य शुक्लत्वम् । "चतुर्मूर्तिमयं शुभ्रं यत्तत्सकळनिष्कळम् । तस्मिन् भोगस्समुद्दिष्टः पत्युर्विश्वस्य सर्वदा" । इत्युक्तत्वात् । "भवहरशिवसंयोगतस्स्फाटिकाभ" इत्युक्तत्वाच्च । निष्कळोऽपि स्फटिकाभः । निष्कळत्वान्न शिवस्य श्वेतत्वम् । तदपि तदधिष्ठानरूपपराबिन्दोरेव । यदाहुः--'शारदनिशाशशाङ्कशतसहस्रसङ्काशप्रकाशपरमाकाशं परमशिवमनुप्रविशते' इति[2] । यथा भूताकाशस्य वृत्तं हरितत्वं प्रत्यक्षं तथा परमाकाशस्य बिन्दुरूपत्वं सितत्वं च निष्कळत्वेऽपि ज्ञेयम् । **भवने देहे** । क्षेत्रपर्यायस्य शरीरस्य विद्यमानतया भवनं देहः । देहे कलासहितं सकळम् । तदुक्तं—'देहस्थस्सकळो ज्ञेयो निष्कळो देहवर्जितः' इति । अवस्थात्रयेऽपि स्फटिकप्रभम् । अत्र स्फटिकत्वमधिष्ठातृभूताणुसदाशिवानामेव । अवस्थात्रयेऽपि नाधिष्ठेयस्य शिवस्य । एवं परं शिवं यो वेत्ति सोऽपि शिव एव । अत्र तस्यापि तेषु शिवस्थानेषु शिवज्ञानेन समज्ञानत्वं न संशयः । इति शिवपरा व्याख्या ।

"ह्रस्वं बिन्दुगतं दीर्घं ब्रह्मरन्ध्रगतं प्लुतम् । द्वादशान्तगतं प्रोक्तं प्रासादं मन्त्रशुद्धये" ॥ इत्युक्तत्वात् बिन्द्वन्तनादान्तलयान्तोच्चार्यमन्त्राणां

---

१. च इत्यपि पाठः । २. मातृकासु "इति" इत्येतत्पदं न विद्यते ।

सकळनिष्कल सकळनिष्कळत्वमर्चनादौ। प्रयोगश्च कर्मनिवेदनसमये सकळेन मानसतया सकळमन्त्रेण कर्मार्पणम्। जपनिवेदनं सकळाकळमन्त्रेण। आत्मसमर्पणं निष्कळेन । कर्मसमर्पणानन्तरं कर्मक्षयेण मायामुत्तीर्य विज्ञानं भवति हंसत्वपदलाभश्च । वाक्शक्तिरूपनिवेदनेनाधिकारमलरहितः । किञ्चिज्ज्ञश्शुद्धात्मतत्त्वसंज्ञोऽस्ति हंस इति । तदा तत्पदलाभः । आत्मसमर्पणेन सोऽहमिति सर्वज्ञशिवो भवति। तदा सम्यगस्ति पदलाभः । तदुक्तमस्माभिः प्रमेयसङ्ग्रहे—

त्वं जीवः खलु केवलश्च सकलश्चाज्ञो मलैः पञ्चभिः
किञ्चिज्ज्ञस्सहितः पुरा तदनु ते पक्वे मले कर्मणा ।
विच्छिन्नाखिलपाशशक्तिरथ तद्ब्रह्माऽमलस्सर्वकृ-
त्सर्वज्ञस्स्वपरप्रकाशचिदभिव्यक्तोऽसि नाभेदतः ॥ इति ॥

तेनापि तथोक्तं—"अर्चयेत्सकळं देवं जपेत्सकळनिष्कळम् । ध्यायेज्ज्योतिर्मयं देवं कलाभिर्नतु कल्पयेत् ॥ व्योम्नि स्फाटिकशुद्धाभं जरामृत्युविनाशनम् । मनसा मोक्षसिद्ध्यर्थं निष्कळे तु लयं शुभम्" ॥४४॥

**भूयः पूजनमीशसन्निधिकरं सम्प्रार्थनं स्वेशयो-**
**रन्योन्यं त्ववलोकनाय भुवने भोगाय सादाशिवे ।**
**ईशाग्न्यर्चनमर्पणं क्षपयितुं बन्धत्रयं कर्मणो**
**ज्ञेयं स्वात्मनिवेदनं परशिवे स्थित्यर्थमेवाऽऽत्मनः ॥ ४५ ॥**

भूय इति ॥ **भूयः पूजनं** आत्मसमर्पणानन्तरं अष्टपुष्पार्चनं सान्निध्यार्थं **सम्प्रार्थनं स्वेशयोरन्योन्यं त्ववलोकनाय** "न्यूनं वाप्यधिकं वा" इत्यादिविज्ञापनं प्रार्थनम् । तदन्योन्यमवलोकनाय । दक्षिणाभिमुखशिवस्योत्तरमुखसाधकस्यापि परस्परावलोकनं घटते । तस्मादनेन पदेनापि चललिङ्गे दक्षिणदिग्स्थमुखकरचरणश्शिव इत्युक्तः । तथोक्तं तेन—"पुनश्शिवमष्टपुष्पिकया सन्निधानार्थं सम्पूज्य तत्र न्यूनं वाऽप्यधिकं वापीति विज्ञापनम् । अत्र प्रार्थनं स्वेशयोरन्योन्यमवलोकनाये"ति ।

ईशाग्न्यर्चनं शिवाग्नौ होमस्सदाशिवभुवने विद्यातत्त्वादिशुद्धतत्त्वे भोगाय। यदाहुः—"अग्निकार्येण सम्पदम्" इति। **कर्मणः** पूजाफल-रूपस्यार्पणं बन्धत्रयं क्षपयितुं आणवकार्ममायेयरूपमलत्रयनाशनाय। स्वात्मनिवेदनमात्मनः परशिवे स्थित्यर्थमेवेति ज्ञेयम्। तदुक्तं तेन "तत्राग्निकार्यानन्तरं कर्मसमर्पणं शक्तिरूपे वरदहस्ते निवेदनं जपसमर्पणं च। आत्मसमर्पणं निष्कळे शिवे। तत्र कर्मसमर्पणं बन्धत्रयविनाशाय। आत्मसमर्पणं परशिवे स्थित्यर्थमेव" इति ॥ ४५ ॥

**अशुद्धतत्त्वौघबहिष्क्रियार्थं**
**पराङ्मुखार्घ्यं परमेश्वरस्य।**
**यस्मिन्नवस्थानकरं विसर्गं**
**कुर्वन् स शैवं पदमभ्युपैति ॥ ४६ ॥**

अशुद्धेति ॥ **अशुद्धतत्त्वौघबहिष्क्रियार्थं** अशुद्धानां पृथिव्यादि-शिवान्तानां तत्त्वौघानामासनरूपेण परिणतानां पञ्चकृत्यप्रवर्तिकाशक्त्य-वस्थाभिरधिष्ठातॄणां बहिष्क्रियार्थं स्वस्वकार्यप्रवृत्तिकरणरूपाधिष्ठानार्थम्। **परमेश्वरस्य** परार्थरूपचिच्छक्तियुक्तशिवस्य। **पराङ्मुखार्घ्यं** वैमुख्य-प्रतिपत्तिरिति शक्तिशम्भुपक्षार्थः। अणुपक्षस्य पूजार्थमावाहनद्वारेण साधकाभिमुखेशानवक्त्रस्य[1] पूजापरिसमाप्त्या मायातत्त्वानवलोकनं बहिष्क्रिया। तदर्थं पराङ्मुखार्घ्यम्। हे स्वामिन् पूजार्थं मदेकचित्ते तिष्ठेति विज्ञप्ति-रभिमुखीकरणम्। तदावाहनम्। अभिमुखीकृतस्य शिवस्य पूजासमाप्तौ भगवन् स्वेष्टदिङ्मुखस्तिष्ठेति विज्ञापनं पराङ्मुखार्घ्यमित्यर्थः। **यस्मिन्** लयरूपे स्वप्रकाशे पदे। **अवस्थानकरं** स्थितिकरम्। **विसर्गं** विसृष्टिं **कुर्वन्** यस्साधकस्सोऽपि मन्त्रद्वारेण **शैवं पदं** लयावस्थाम्। **अभ्युपैति**।

---

१. वक्त्रमापाद्य शुद्धतत्त्वयुक्तस्य पूजापरिसमाप्त्या मायाद्यनवलोकनं बहिष्क्रिया इत्यपि पाठः।

प्राप्नोति । प्रलीनसर्वार्थव्यापारे शिवे सति तदा स्वात्मनिष्ठदृक्क्रिये शिवे स्वस्य तादृग्विधरूपव्यक्तिविसर्जनमित्यर्थः । परार्थविसर्जनं तदेवेति शम्भुपक्षः । अणुपक्षस्य तु यस्मिन्मायाद्यनवलोकनरूपोर्ध्वदिगीक्षणत्वे मध्यस्थेशानवक्त्रस्यावस्थानकरं स्थितिकरं विसर्गं पूजापरिसमाप्तिरूपविज्ञापनं कुर्वन् यस्साधकस्स बुभुक्षुश्चेत् शैवं पदं विद्यातत्त्वाख्यनादकैवल्यसालोक्यं ईश्वरतत्त्वाख्यसामीप्यं सदाशिवतत्त्वाख्यसारूप्यं निवृत्त्यादिकलारूपशक्तितत्त्वाख्यमूर्तिकैवल्यं इन्धिकादिभुवनरूपशिवतत्त्वाख्यनादकैवल्यं व्यापिन्यादिभुवनरूपशिवतत्त्वाख्यशक्तिकैवल्यं च मुमुक्षुश्चेद्द्विध्वातीतशिवसायुज्यं च देहान्ते प्राप्नोतीत्यर्थः । एव विसर्जनं द्विधा । सापेक्षो निरपेक्षश्चेति । सिद्ध्यर्थं परिगृहीतलिङ्गे मुखलिङ्गसहस्रलिङ्गादौ आत्मार्थचललिङ्गेषु परार्थाऽऽत्मार्थचलप्रतिमादिषु सापेक्षः । स्थण्डिलादिषु निरपेक्षः । सर्वत्रानपेक्षो वा । तदा लिङ्गशुद्धिः पुनरपि कार्या । तथा कामिके—

संहारमुद्रयाऽस्त्रेण देवानावरणस्थितान् ।
उत्थाप्य मूर्तिमन्त्रेण योजयेन्मूर्तिसङ्गतम् ॥

परिगृहीतलिङ्गेषु सापेक्षः प्राक्प्रदर्शितः ।
चललिङ्गे तु सापेक्षोऽनपेक्षस्स्थण्डिले सदा ॥

सर्वत्र वाऽनपेक्षस्तु प्रत्यहं विहितो यतः ।
निरपेक्षं विसृज्येशं लिङ्गं संशोध्य पूर्ववत् ॥

प्रणवे योगपीठे तु मूर्तिं तस्य तदात्मिकाम् ।
पवित्रैस्सकलीकृत्य गायत्र्या पर्युवासयेत् ॥

अलङ्कृत्य ततश्शक्त्या भोगार्थं कुसुमादिभिः ।
वेदिकासहितं लिङ्गं क्षमस्वेति च वै वदेत् ॥ इति ॥ ४६ ॥

विप्रोत्तुङ्गश्चोळदेशी च सूरि-
श्शम्भोः पूजास्तोत्रमेतत्पवित्रम् ।

सिद्धान्तज्ञो ज्ञानशम्भुश्शिवोक्त्या
चक्रे भक्त्या भुक्तये मुक्तये च ॥ ४७ ॥

विप्रोत्तुङ्ग इति ॥ विप्रोत्तुङ्गः विप्रेषु वेदवेदाङ्गाध्ययनगार्भधानादिस्मार्तकर्मसोमयागादिश्रौतकर्मभिरविच्छिन्नैः शिवदीक्षायां वागीशीगर्भजातद्विजत्वेनाप्युत्तुङ्गः उत्कृष्टः यः स विप्रोत्तुङ्गः। अस्तु शिवदीक्षायुक्तानां सोमयागाद्या अप्राप्ताः। सोमपाने उच्छिष्टसम्प्रर्कः। पशुविशसने हिंसादोषः। हविश्शेषभक्षणेन मांसभक्षणदोषः। यज्ञदिवसेष्वन्यक्रियानर्हत्वान्नित्यपूजालोपदोषः। शिवस्य यज्ञेषु प्रत्यक्षहविर्दानार्थं विष्ण्वादीनां हविर्दानदर्शनाद्वैष्णवयज्ञाराधनदोषः। ज्योतिष्टोमेन स्वर्गकामो यजेतेति स्वर्गफलत्वान्मुक्तस्य पशुत्वप्रतिपादनदोषः। दीक्षायां चत्वारिंशत्संस्कारशुद्धिश्रवणात्पुनस्तत्करणेन निष्प्रयोजनत्वं सम्भवतीति यज्ञः कृतश्चेद्दीक्षितेन पुनश्च शिवदीक्षा कर्तव्येति केचिदाचार्यानुग्रहविरहिताश्शैवपाषण्डिन उच्चावचासमञ्जसमालपन्ति। तान् प्रति शिववाक्यानि लिखामः। उच्छिष्टसम्पर्कस्य स्वायम्भुवे— "धर्मसाधनसंवित्तिराम्नायादेव जायते। तन्मूलत्वात्स्मृतेश्चापि ताभ्यामेवापरस्य च" ॥ इत्युक्तत्वाच्छ्रुतिस्मृत्युक्तानुष्ठानं सकलमपि ग्राह्यम्। न सोमेनोच्छिष्टा भवन्ति। स्मृतिरपि —'ताम्बूलं सन्तता धारा सोममिक्षुरसं पयः। मधुमांसं फलं नारी नोच्छिष्टं मनुरब्रवीत्' ॥ इति। वेदिकायां रजोविरचितमण्डले निवृत्यादिद्वाराणि वामादिकेसराणि ब्रह्माङ्गपत्राणि धर्मादिपदानि गात्राण्यधर्मादीनि गणेशवज्रादीनां च दिक्षु विदिक्षु मध्ये पद्मस्वस्तिकबिन्दूत्पलादयस्सन्ति। तेषु यत्र पुष्पपातस्तन्मन्त्राख्या। ज्ञानपादपतितपुष्पेण ज्ञानशिवः। तथा प्रयोगश्च धर्मशिवः वैराग्यशिवः भूतिकण्ठश्च पादपुष्पपतनेन। ईशानशिवो व्योमशिवस्त्रिलोचनशिवश्च ईशानपत्रे। सर्वात्मविद्येशलोकेशशिवा हृदयशिवोऽग्निपत्रे।

---

१. शिवयज्ञेषु प्रत्यक्षहविर्दानात् विष्ण्वादीनां इत्यपि पाठः ॥

उग्रज्योतिर्बहुरूपाघोरशिवा याम्यपत्रे । सद्योज्योतिः पश्चिमपत्रे । शिवगोचराणां शिवान्तम् । ज्योतिर्गोचराणां ज्योतिरन्तम् । मूर्तिशिवश्च ब्रह्मशिवश्च ब्रह्मपत्रेषु । उत्तुङ्गशिवश्च विद्यान्तशिवश्च सर्वविद्याधिपो व्योमशिवः पूर्णशिवश्च विद्येशानशिवश्च मध्यपतनेन । श्रीकण्ठादिशिवो विद्येशावरणे। लोकेशावरणे वरुणशिवः सोमशम्भुः ब्रह्मशम्भुः । नारायणकण्ठरामकण्ठौ विष्णुदिग्पतनेन । विद्याकण्ठो विद्याकलाद्वारपतनेन । शिवशिखाज्योतिस्सावित्रीव्योमगोचराणाम् ईशास्त्रशान्त्यतीतादीनामधिष्ठानत्वात् शिखाकुलस्य तत्पुरुषाधिष्ठानत्वात् तत्स्थाने भूतिकण्ठसंज्ञा । शिखाकुलस्य दक्षिणामूर्तिदेवाघोरदेवौ याम्यपत्रे । एवमनलशिवः धर्मदेव इत्यादयः । तस्माज्ज्ञानशिवो ज्ञानपादपतनात् । ......[1]दैगमप्रकारेण पवित्रं स्रोतोऽन्तरोक्तं क्रि........शम्भोरेतत्स्तोत्रं भक्त्या भुक्तये मुक्तये च ज्ञातवासनस्यामोघफले भवत इत्याशयः ।

इति सव्याख्यशिवपूजास्तवः

समाप्तः ।

---

१. मातृकास्वक्षराणि अस्मिन् स्थले विरलानि वर्तन्ते ।

॥ श्रीः ॥

# शिवपूजास्तवशुद्धाशुद्धसूची

| अशुद्धम् | शुद्धम् | पुटः | पङ्क्तिः |
|---|---|---|---|
| गुणान् | गुणाः | १० | ८ |
| त्वत् | त्वात् | ११ | २३ |
| र्यंकं | र्यंकं | १२ | १४ |
| मूर्ध | मूर्ध | १७ | ८ |
| ह्रस्वो | ह्रस्वो | २१ | १६ |
| ह्रस्व | ह्रस्व | २३ | ४ |
| ※ क्षि | : क्षि | ,, | ८ |
| सयुंतः | संयुतः | २७ | २ |
| बम् | वम् | २८ | ३ |
| णः। सृष्टि | णः सृष्टि | ,, | २४ |
| पर्य | पर्यय | ३९ | २४ |
| तत्वं | तत्वं | ४२ | ३ |
| तिस्या | तिस्स्या | ,, | ५ |
| र्त्तांध | त्तार्ध | ४४ | १४ |
| पुरः | पूरः | ४९ | १९ |
| तत्प | तत्म | ५१ | १९ |
| अनादि | अनाति | ९६ | १४ |
| नादि | नाति | ,, | १५ |
| नादि | नाति | ,, | १७ |

| अशुद्धम् | शुद्धम् | पुटः | पङ्क्तिः |
|---|---|---|---|
| करा | किरा | ६१ | ८ |
| सन | सनं | ६२ | २२ |
| शिवनाह | शिवानाह | ६९ | ३ |
| वक्र | वक्रं | ,, | २० |
| स्मृता | स्मृताः | ७० | ११ |
| थिता | स्थिता | ७२ | १६ |
| हीनो | र्हीनो | ७४ | १७ |
| मूर्ध्वं | मूर्ध्वं | ८० | १० |
| त्तरस्य | त्तरास्य | ,, | ११ |
| भनो | मनो | ८१ | २१ |
| सव | सर्व | ८४ | ७ |
| ,, | श्च | ,, | २६ |
| श्वैध | वैश्व | ८५ | २३ |
| र्वुहु | र्बहु | १०३ | ९ |
| वृज | व्रज | १०५ | ८ |
| यथा | यदा | ,, | १७ |
| गार्भ | गर्भा | ११० | ४ |

॥ श्रीः ॥

# प्रकटनपत्रिका ।

## देवकोट्टै शिवागमसङ्घेन सम्मुद्र्य प्रकाशितानां पुस्तकानां सूची ॥

१. शिवार्चनाचन्द्रिका—(देवनागरीलिप्यां) श्रीमदप्पय्यदीक्षितकृता। अस्मार्थपूजायाः प्रकाशयित्री। रू–१–०–०

२. शिवार्चनाचन्द्रिका—सैव द्राविडभाषया विपरिणता। रू–१–८–०

३. अष्टप्रकरणम्—(देवनागरीलिप्यां) तत्त्वप्रकाशिकातत्त्वसङ्ग्रहतत्त्वत्रयनिर्णयरत्नत्रयभोगकारिकानादकारिकामोक्षकारिकापरमोक्षनिरासकारिकाख्यग्रन्थाष्टकसंयुतम्। सव्याख्यमेकं पुस्तकम्। रू–२–८–०

४. अष्टप्रकरणम्—तदेव द्राविडभाषया विपरिणतम्। रू–३–०–०

५. मतङ्गपारमेश्वरागमः—विद्यापादमात्रयुतः (देवनागरीलिप्याम्) रू–१–०–०

६. शम्भुपूजाविधिः–सुब्रह्मण्यशिवाचार्यविरचितः। ग्रन्थलिप्याम्। रू–०–१–०

७. शैवभूषणम्—पञ्चाक्षरयोगिकृतम्। (ग्रन्थमूलयुतं द्राविडव्याख्यामिळितम्) रू–१–०–०

८. शैवसिद्धान्तपरिभाषा—सूर्यभट्टविरचिता (देवनागरीलिप्याम्) रू–०–८–०

९. शैवसिद्धान्तपरिभाषा—सैव द्राविडभाषया विपरिणता। रू–०–८–०

१०. मृगेन्द्रागमः—(देवनागरीलिप्यां) विद्यायोगपादद्वयमिळितः। भट्टनारायणकण्ठकृतवृत्त्या तद्व्याख्यया अघोरशिवाचार्यकृतदीपिकया च संयुतः। पूर्णकलिकोवैण्ट्। रू–५–०–०

११. शिवालयनित्यपूजाविध्याख्यपरार्थनित्यपूजाविधिः–अघोरशिवाचार्यविरचितः (ग्रन्थलिप्याम्) रू–१–०–०

१२. शिवालयनित्यपूजाविध्याख्यपरार्थनित्य- पूजाविधिः। स एव द्राविडभाषया विपरिणतः। रू–१–०–०

१३. क्रियाकाण्डक्रमावळ्याख्या सोमशम्भुपद्धतिः। (देवनागरीलिप्याम्) रू–२–८–०

१४. क्रियाकाण्डक्रमावळ्याख्या सोमशम्भुपद्धतिः। द्राविडभाषया विपरिणता। रू–२–८–०

१५. किरणागममहातन्त्रम्— गरुडोपश्रुतम्। (ग्रन्थ- लिप्यां) पादचतुष्टययुतम् रू–२–८–०

१६. शैवकालविवेकः—निगमज्ञानशिवाचार्य रचितः। (ग्रन्थलिप्याम्) रू–१–४–०

१७. शिवपूजास्तवः—ज्ञानशिवाचार्यरचितः। (देवनागरीलिप्याम्) रू–१–०–०

(प्रेषणव्ययः पृथगेव)

दशरूप्यकपरिमितपुस्तकस्वीकर्तॄणां एकरूप्यकस्य पादरूप्यकमिति रीत्या लाभः (कमिषन्) दीयेत।

## मुख्या काचन विज्ञप्तिः।

पुस्तकेप्सवो ग्रन्थद्राविडदेवनागरीभेदनिवेदनपूर्वकमेव पुस्तकप्रेषणार्थसन्देशपत्रिकां सुविशदं विलिखेयुः॥

देवनागर्यष्टप्रकरणेषु द्राविडाष्टप्रकरणेषु च पूर्वं प्रकरणत्रयं उत्तरं प्रकरणपञ्चकं च पार्थक्येन च दीयेत। प्रकरणत्रयस्य रू १–०–०; प्रकरणपञ्चकस्य रू–२–०–०.

एतानि पुस्तकानि पेरियकाञ्चीपुरं पुण्यकोटि शिवश्री सोमसुन्दरशिवाचार्येषु लभ्येरन्॥

इत्थं कार्यदर्शी,
शिवागमसङ्घः, देवकोट्टै.

